ततः सपत्नीकः कन्याप्रदः वधूवरयोश्चरणप्रक्षालनम् (गोडा धुने कार्य) कुर्य्यात् -। बृहत्पात्रोपरि (खड्कुलो) वरस्य चरणौ वध्वाश्च चरणौ संस्थाप्य करूवा (झारी) स्थशुद्धजलेन ब्राह्मण - वरस्य पूर्वं दक्षिणं पादं प्रक्षालयति । यथा- "विराजो दोहोसीति प्रजापतिर्ऋषिर्यजुश्छन्द आपो देवता दक्षिण-पादप्रक्षालने विनियोगः। ॐ विराजो दोहोसि विराजो दोहमशीय मयि पाद्यायै विराजो दोहः"।। इति मन्त्रेण प्रथमं दक्षिणं पादं प्रक्षाल्य अनेनैव मन्त्रेण वामपादं च प्रक्षालयेत् ।। कन्यायास्तु अनेनैव मन्त्रेण प्रथमं वामं पश्चात् दक्षिणं पादं प्रक्षालयेत् ।। क्षत्रियादीनां वराणां तु अनेनैव मन्त्रेण प्रथमं वामं पादम् पश्चात् दक्षिणपादं प्रक्षालयेत् ।। ततः चन्दनाऽक्षतमाल्या-दिना कन्यां वरं च सम्पूज्य स्वर्णशृङ्खलादिकं परिधाप्य धूपदीपौ च कारयेत् ।। अत्रैवाऽवसरे इतरेऽपि कन्यापक्षीयाः कन्यायाश्चरणौ प्रक्षालयन्ति (गोडा धोइदिन्छन् ।) यथाशक्ति यौतिकम्

(उपहारं) च ददति ।।

अथ पाणिग्रहणाऽर्हे लग्ने समागते उभयपक्षयोः लग्नगोदानविधानम् । प्रथमं वरपिता- सजलपात्रस्थं गोनिष्क्रयीभूतं स्वर्णद्रव्यम् चन्दनाक्षत - पुष्पैः - 'ॐ नमो गोभ्यः०' इत्यादिना सम्पूज्य तथा देयब्राह्मणं च - 'ॐ नमो ब्रह्मण्यदेवाय०' इत्यादिना सम्पूज्य कुशादीन्यादाय पात्रं स्पृशन् पूर्वसंकल्प-मुच्चार्य अद्येहाऽमुकगोत्रोऽहम् अमुकराशेरस्य वरस्य विवाहलग्नाद् यत्रकुत्रस्थानस्थितानाम् ग्रहाणां दुष्टफलनिरासपूर्वकं शुभफलप्राप्तये आदित्यादिनवग्रहाणां प्रीतये इदं सुवर्णं तन्निष्क्रयीभूतं द्रव्यं वा अमुक गोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यम् सम्प्रददे ॐ तत्सत् ।। ब्राह्मणश्च 'ॐ स्वस्ति' इति उच्चरन् तत्पात्रमाकर्ष्य तत्रस्थजलेन- 'ॐ कोऽदात्०' इत्यादि मन्त्रं पठन् यजमानम् अभिषेकं कृत्वा तद् द्रव्यम् गृहणीयात् ।।

अथ कन्यापिताऽपि लग्नगोदानं कुर्यात् । पूर्वोक्तरीत्या सजलपात्रस्थं गोनिष्क्रयीभूतं द्रव्यं चन्दनाऽक्षतपुष्पैः - 'ॐ नमो गोभ्यः०' इत्यादिना सम्पूज्य तथा देयब्राह्मणं च- 'ॐ नमो ब्रह्मण्यदेवाय०' इत्यादिना संपूज्य कुशादीन्यादाय पात्रं स्पृशन् पूर्वसंकल्पमुच्चार्य 'अद्येहेत्यादि अमुकगोत्रोऽहम् अमुकराशेरस्याः कन्यायाः कन्यादानलग्नात् निषिद्धे चतुर्थाऽष्टम - द्वादशस्थाने स्थितानां क्रूरग्रहाणां दुष्टफलनिवृत्तिपूर्वकम्, शुभे स्थाने स्थितानां ग्रहाणां शुभफलाधिकताऽवाप्तये इदं गोनिष्क्रयीभूतं द्रव्यं चन्द्रदैवतम् अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यं सम्प्रददे' ।। इति दत्त्वा - 'ॐ कपिले सर्वदेवानाम्०' इत्यादिना प्रार्थ्य दानप्रतिष्ठाद्रव्यं सकुशोदक-मादाय- 'ॐ अद्य कृतैतद् ग्रहप्रातिकूल्यसंभाविताऽ-शुभफलनिवृत्तिपूर्वक-शुभफलाऽ वाप्तये कृतस्य गोनिष्क्रयी-भूतद्रव्यदानकर्मणः साङ्गता-सिद्ध्ये इदं रजतं द्रव्यं चन्द्रदैवतं

गोदानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे' ।। इति दद्यात् ।। ततः पुनः कुशादीन्यादाय पूर्वसंकल्पमुच्चार्य अमुकगोत्रः 'अमुकशर्माऽहं समस्त पितॄणां निरतिशयानन्द-ब्रह्मलोकाऽवाप्त्यादि कन्यादानकल्पोक्त-निखिलफलाऽवाप्तये, तथा अनेन वरेण अस्यां कन्यायाम् उत्पादयिष्यमाणया सन्तत्या द्वादशपरान् द्वादशाऽवरान् आत्मना सपञ्चविंशान् पुरुषान् पवित्री - कर्तुं श्रीमल्लक्ष्मीनारायणप्रीतिसिद्धये ब्राह्मेण विधिना यथाशक्ति अलंकृतायाः कयायाः प्रदानं करिष्ये' इति संकल्पजलम् उत्सृ-जेत् ।। ततः कृताञ्जलिः- 'ॐ दाताऽहं वरुणो राजा द्रव्यमादित्यदैवतम् । वरोऽसौ विष्णुरूपेण प्रतिगृह्णात्वयं विधिः।।' इति च पठेत् ।।

ततः उत्थाय शंख-घण्टा-तूर्यमङ्गलघोषपुरस्सरम् भारते उदङ् (उत्तर) मुखोपविष्टः कन्यापिता प्रत्यङ् (पश्चिम) मुखोपविष्टायाः कन्यायाः दक्षिणं पाणिं प्राङ् (पूर्व) मुखोपविष्टस्य वरस्य दक्षिणपाणितलस्योपरि निधाय;

नेपाले उभावपि वधूवरौ मञ्चे मञ्चे वा एकस्यामेव खट्वायां कन्यां, कन्याया वामे वरं च पूर्वमुखौ उपवेश्य (बसाएर) प्रत्यङ् (पश्चिम) मुखः कन्यापिता शङ्खदूर्वाक्षतकुशजलादीनि कन्यादक्षिणपाण्यङ्गुष्ठं च गृहीत्वा अधस्तात् विस्तृतपात्रं (खड्कुलो) निधाय पत्न्या भृङ्गारेण (झारी वा करुवा नामकपात्रेण) सततां जलधारां प्रवर्तयन्त्याम् - (कन्यादानमहासंकल्पः)

"ॐ तत्सत् ॐ तत्सत् ॐ तत्सत् विष्णुः विष्णुः विष्णुः श्रीमुकुन्दसच्चिदानन्दस्य ब्रह्मणो ऽनिर्वाच्यमायाशक्तिविजृम्भिताविद्यायोगात् कालकर्म्मस्वभावा - विर्भूतमहत्तत्त्वोदिताऽहङ्कारोद्भूत-वियदादिपञ्चमहाभूतेन्द्रियदेवता-निर्मिताऽण्डकटाहे चतुर्दशलोकात्मके लीलया तन्मध्यवर्ति - भगवतः श्रीनारायणस्य नाभिकमलोद्भूतसकललोकपितामहस्य ब्रह्मणः सृष्टिं कुर्वतस्तदुद्धरणाय प्रजापतिप्रार्थितस्य समस्तजगदुत्पत्ति-

स्थिति-लयकारणस्य जगद्रक्षाशिक्षाविचक्षणस्य प्रणतपारिजातस्य अच्युतानन्तवीर्यस्य श्रीमद्भगवतो महापुरुषस्य अचिन्त्यापरिमितशक्त्या ध्येयमानस्य महा-जलौघमध्ये परिभ्रममाणानामनेककोटिब्रह्माण्डानामेकतमेऽव्यक्तमहदहङ्कार- पृथिव्यप्तेजोवाय्वाकाशाद्यावरणैरावृते अस्मिन् महति ब्रह्माण्डखण्डे आधारशक्ति श्रीमदादिवाराहदंष्ट्राग्रविराजिते कूर्माऽनन्तवासुकितक्षक - कुलिक-कर्कोटक-पद्म-महापद्मशंखाद्यष्ट-महानागैर्ध्रियमाणे ऐरावत-पुण्डरीक-वामन-कुमुदाऽञ्जन-पुष्पदन्त-सार्वभौम- सुप्रतीकाष्टदिग्गज-प्रतिष्ठितानाम् अतल-वितल-सुतल-तलातल-रसातल-महातल-पाताल-लोकानामुपरिभागे भूर्लोक-भुवर्लोक-स्वर्लोक-महर्लोक-जनलोक-तपोलोक-सत्यलोकाऽऽख्य सप्तलोका-नामधोभागे चक्रवाल-शैल-महावलयनागमध्यवर्तिनो महाकाल-महाफणिराजशेषस्य सहस्रफणानां मणिमण्डलमण्डिते दिग्दन्तिशुण्डोत्तम्भिते

अमरावती-अशोकवती-भोगवती-सिद्धवती-गान्धर्ववती - काञ्ची - अवन्ती-अलकावती- यशोवतीति पुण्यपुरी-प्रतिष्ठिते इन्द्राग्नियमनिर्ऋतिवरुणवायु-कुबेरेशानाष्टदिक्पालप्रतिष्ठिते वर-ध्रुवाऽ-धर-सोमपा-प्रभञ्जनाऽ-नल-प्रत्यूष-प्रभासाख्याष्टवसुभिर्विराजिते हर-त्र्यम्बक-रुद्र-मृगव्याधापराजितकपाली-भैरव-शम्भुकपर्दि-वृषाकपि-बटुरूपाऽऽख्यैकादशरुद्रैः संशोभिते रुद्रोपेन्द्रसवितृधातृत्वष्टृयमेन्द्रे-शानभगमित्रपूषार्काख्यद्वादशादित्यप्रकाशिते यमनियमासनप्राणायाम-प्रत्याहारधारणाध्यानसमाध्यष्टाङ्गनिरतवशिष्ठ-बालखिल्य-विश्वामित्र-दक्ष-कात्यायन-कौडिन्य-गौतमाऽ-ङ्गिरस-पाराशर्य-व्यास-वाल्मीकि-शुक-शौनक-भरद्वाज-सनक-सनन्दन-सनातन- सनत्कुमार-नारदादिमुख्यमुनिभिः पवित्रिते लोकाऽलोकाचलवलयिते लवणेक्षुरससुरासर्पिर्दधिक्षीरोदकयुक्त-सप्तार्णवपरिवृते जम्बू-प्लक्ष-शाल्मलि-कुश-क्रौञ्च-शाक-पुष्कराख्य

सप्तद्वीपयुते इन्द्रकांस्यताम्रगभस्तिनाग-सौम्यगन्धर्वचारणभारतेति नवखण्डमण्डिते सुवर्णगिरिकर्णिकोपेत-महासरोरुहाकारपञ्चाशत् कोटियोजनविस्तीर्ण-भूमण्डले अयोध्या-मथुरा- माया-काशी-काञ्ची -अवन्तिका -द्वारावतीति सप्तपुरीप्रतिष्ठिते महामुक्तिप्रदस्थले शालग्राम-शम्भल- नन्दिग्रामेति ग्रामत्रयविराजिते चम्पकारण्य- बदरिकारण्य-दण्डकारण्याऽ-र्बुदारण्य-धर्मारण्य-पद्मारण्य-गुह्यारण्य-जम्बुकारण्य-विन्ध्यारण्य- द्राक्षारण्य-नहुषारण्य-काम्यकारण्य-द्वैतारण्य-नैमिषारण्यादीनां मध्ये सुमेरु-निषध-कूट-शुभ्रकूट-श्रीकूट-हेमकूट -रजतकूट-चित्रकूट-त्रिकूट-किष्किन्ध-श्वेताद्रिकूट-हिमवद्-विन्ध्याचलानां हरिवर्ष-किम्पुरुषवर्षयोश्च दक्षिणे नवसहस्रयोजनविस्तीर्णे भरतखण्डे मलयाचल-सह्याचल-विन्ध्याचला-नामुत्तरेण स्वर्णप्रस्थ-चण्डप्रस्थ -सूक्तिक-आवन्तक -रमणक-महारमणक-पाञ्चजन्य-सिंहल-लङ्का-

ऽशोकवती-अलकावती-सिद्धावती - गान्धर्ववत्यादि-पुण्यपुरीविराजिते नवखण्डोपद्वीपमण्डिते दक्षिणाऽवस्थितरेणुकाद्वय-सूकर-काञ्ची-कालिकाल-बटेश्वर-कालञ्जर-महाकालेति नवखण्डयुते-द्वादशज्योतिर्लिङ्ग-गङ्गा (भागीरथी)- गोदा (गौतमी) -क्षिप्रा-यमुना-सरस्वती-नर्मदा-तापी पयोष्णी-चन्द्रभागा- काबेरी-मन्दाकिनी-प्रवरा-कृष्णा-वेण्या-भीमरथी-तुङ्गभद्रा-मलापहा-कृतमाला-ताम्रपर्णी-विशालाक्षी-वञ्जुला-चर्म्मण्वती-वेत्रवती-भोगवती-विशोका-कौशिकी-गण्डकी-वासिष्ठी-प्रमदा-विश्वामित्री-फल्गुनी-चित्रकाश्यपी-सरयू-सर्वपापहारिणी-करतोया-प्रणीता-वज्रा-वक्रगामिनी-सुवर्णरेखा-शोणा-भवनाशिनी-शीघ्रगा-कुशवर्तिनी-ब्रह्मानन्दा-महितनया-वागमती-कमला-त्रिशूली, नारायणी-कर्णाली-शारदा इत्याद्यनेकपुण्यनदीभिर्विलसिते-ब्रह्मपुत्र-सिन्धुनदादिपरमपवित्रजलविराजिते हिमवत्-मेरु गोवर्धन-क्रौञ्च-चित्रकूट

-महेन्द्र-मलय-सह्य-इन्द्रकील-पारियात्राद्यनेक पर्वतसमन्विते मतङ्ग-माल्य-किष्किन्ध-ऋष्यशृङ्गेति महानगसमन्विते अङ्ग-बङ्ग-कलिङ्ग-काश्मीर-कम्बोज-सौवीर-सौराष्ट्र-मगध-नेपाल-केरल-चोल-पाञ्चाल-गौड-मालव-मलय-सिंहल-द्रविड-कर्नाटक-ललाट-करहाट-वरहाट-पानाट-पाण्ड्य-निषध-मागध-आन्ध्र-दशार्ण-भोज-कुरु-गान्धार-विदर्भ-विदेह-बाह्लीक-बर्बर-कैकेय-कोसल-विराट-शूरसेन-कोङ्कण-कैकट-मत्स्य-मद्र-पारसीक-खर्जूर-यावन-म्लेच्छ-जालन्धरेति तथा सिन्धुवत्यनेकदेशविशेष-भाषा-भूमिपाल-विचित्रिते इला-वृत-कुरु-भद्राऽश्व-केतुमाल-किम्पुरुष-रमणक-हिरण्मयादिनववर्षाणाम् मध्ये भरतखण्डे बकुल-चम्पक-पाटलाब्ज-पुन्नाग- जाति-करबीर-रसाल-कह्लार-केतक्यादि नाना विधकुसुमस्त-वकविराजिते कोकन्त-हिरण्यशृङ्ग-कुब्जार्बुद-मणिकर्णी-वट-शालग्राम-सूकर-मथुरा-गया-निष्क्रमण-

लोहार्गल-पोतस्वामि-प्रभास-बदरी इति चतुर्दशगुह्यविलसिते जम्बूद्वीपे कुरुक्षेत्रादिसमभूमध्यरेखायाः पूर्वदिग्भागे कुलमेरोर्दक्षिणदिग्भागे विन्ध्यस्य उत्तरे देशे श्रीशैलस्य वायव्यदेशे विन्ध्याचल-हिमालययोर्मध्यदेशे आर्यावर्ताख्यपुण्यक्षेत्रे मत्स्य-कूर्म-वराह-नृसिंह-वामन-परशुराम-राम-कृष्ण-बुद्ध-कल्कि इति दशावताराणां मध्ये बौद्धावतारे गङ्गादि सरिद्भिः पाविते एवं नवसहस्त्रयोजनविस्तीर्णे भारतवर्षे निखिलजनपावन-परमभागवतोत्तमशौनकादिनिवासिते नैमिषारण्ये आर्यावर्तान्तर्गतब्रह्मावर्तैकदेशे सूर्याऽन्वयभूभृत्प्रतिष्ठिते श्रीमन्नारायण नाभिकमलोद्भूतसकलजगत्स्त्रष्टुः परार्द्धद्वयजीविनो ब्रह्मणो द्वितीये परार्धे एकपञ्चाशत्तमे वर्षे प्रथममासे प्रथमपक्षे प्रथमदिवसे अह्नो द्वितीये यामे तृतीये मुहूर्ते रथन्तरादिद्वात्रिंशत्-कल्पानां मध्ये अष्टमे श्वेतवाराहकल्पे स्वायम्भुवादि मन्वन्तराणां मध्ये सप्तमे वैवस्वतमन्वन्तरे कृत-त्रेता-द्वापर-कलिसंज्ञकानां चतुर्णां युगानाम्

मध्ये वर्तमाने अष्टाविंशतितमे कलियुगे तत्प्रथमे विभागे (पादे) श्रीमन्नृ-पतिविक्रमाऽब्दात् श्रीमन्नृपशालिवाहनाद् वा यथासंख्यागमेन चान्द्र-सावन-सौर-नाक्षत्रादिप्रकारेणाऽऽगतानां प्रभवादिषष्टिसंवत्सराणां मध्ये अमुकनाम्नि संवत्सरे उत्तर (वा दक्षिण) गोलाऽवलम्बिनि श्रीमार्तण्डमण्डले अमुकर्तौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते सूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथास्थानस्थितेषु सत्सु एवं ग्रहगुणविशेषेण विशिष्टायाम् अस्यां शुभपुण्याऽवस्थायाम् अमुकगोत्रोऽमुकराशिरमुक शर्मा सपत्नीकोऽहम् अमुकगोत्रस्य अमुकप्रवरस्य अमुकशाखिनोऽ-मुकवेदाध्यायिनोऽमुकशर्मणः प्रपौत्राय, अमुकशर्मणः पौत्राय, अमुकशर्मणः पुत्राय आयुष्मते विष्णुस्वरूपिणे कन्यार्थिने अमुकनाम्ने वराय; अमुकगोत्रस्य अमुकप्रवरस्य

अमुकशाखिनोऽमुकवेदाध्यायिनोऽ मुकशर्म्मणः प्रपौत्रीम्, अमुकशर्म्मणः पौत्रीम्, अमुकशर्म्मणः पुत्रीम् आयुष्मतीं श्रीस्वरूपिणीं वरार्थिनीम् अमुकनाम्नीम् इमां कन्यां यथाशक्त्यलंकृतां यथाशक्त्युपकल्पितयौतुकयुतां प्रजापतिदैवत्यां पुराणो- क्तशतगुणीकृतज्योतिष्टोमातिरात्रसमस्त- फलप्राप्तिकामः मम समस्तपितॄणां निरतिशयानन्द-ब्रह्मलोकावाप्त्यादि- कन्यादानकल्पोक्तफलाऽवाप्तये अनेन वरेणाऽस्यां कन्यायाम् उत्पादयिष्यमाणसन्तत्या द्वादशपरान् द्वादशाऽवरान् पितॄन् आत्मानञ्च पवित्रीकर्तुं श्रीलक्ष्मीनारायणप्रीतये देवाग्नि-गुरुब्राह्मणसान्निधौ अग्निसाक्षिकतया सहधर्माचरणाय तुभ्यमहं संप्रददे प्रतिगृह्णातु भवान् प्रजापतिः प्रीयताम्'' इति संकल्प्य दाता उत्थाय सकुशाऽक्षतजलं कन्याहस्तं वरहस्ते समर्प्य अञ्जलिं बध्वा कन्यादानवाक्यं पठेत् - 'कन्यां कनकसम्पन्नां कनकाऽऽभरणैर्युताम् । दस्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया ।।१।।

विश्वम्भराः सर्व्वहिताः साक्षिण्यः सर्व्वदेवताः । इमां कन्यां प्रदास्यामि पितॄणां तारणाय च ।।२।। गौरीं कन्यामिमां विप्र ! यथाशक्तिविभूषिताम् । गोत्राय शर्मणे तुभ्यं दत्तां विप्र ! समाश्रय ।।३।। कन्या लक्ष्मीः समाख्याता वरो नारायणः स्मृतः। तस्मात् कन्याप्रदानेन कृष्णो मे प्रीयतामिति' ।।४।। इति कन्यादानवाक्यानि पठित्वा ततः कन्यां प्रार्थयेत् -'कन्ये ममाऽग्रतो भूयाः कन्ये मे देवि पार्श्वयोः ! कन्ये मे पृष्ठतो भूयास्त्वद्दानान्मोक्षमाप्नुयाम् '।। इति संप्रार्थ्य श्रीलक्ष्मीनारायणप्रीतये वरकन्ययोः पूजनं कृत्वा विष्णुं प्रार्थयेत् - 'त्रैलोक्यनाथ देवेश सर्वभूतदयानिधे । दानेनाऽनेन सुप्रीतः सदा शान्तिं प्रयच्छ मे ।। इति।। तदनन्तरं वरः पठेत् - 'ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्ब्बाहुब्भ्यां पूष्णो हस्ताभ्यां प्रजापतये प्रतिगृह्णामि द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु ॐ स्वस्ति प्रजापतये' इत्युक्त्वा वध्वाः दक्षांगुष्ठं गृहीत्वा इमां कामस्तुतिं

पठेत् - 'ॐ कोऽदात् कस्माऽ अदात् कामोऽदात् कामायादात् कामो दाता कामः प्रतिग्रहीता कामैतत्ते' ।। ततो दाता पुनः अञ्जलिं बध्वा पठेत् - 'कन्या मम कुले जाता पालिताऽ द्यतनाऽवधि । तुभ्यं विप्र मया दत्ता पुत्रपौत्रविवर्धिनी ।। धर्मे चाऽर्थे च कामे च नाति-चरितव्या त्वया इयम्' ।। ततो वरः- 'ॐ नातिचरामि' इति प्रतिवदेत् ।।

ततो दाता उपविश्य कन्यादानप्रतिष्ठां कुर्यात्- । तिलकुशयवजल-सुवर्णादि द्रव्यमादाय- 'ॐ पूर्वसंकल्पसिद्धिरस्तु अद्येह अमुकोऽहं कन्या-दानकर्मणः साद्गुण्यार्थं फलप्रतिष्ठासिद्ध्यर्थम् इदं सुवर्णम् अग्निदैवतम् अमुकगोत्राय वराय तुभ्यं सम्प्रददे तथा दास्यमानं यौतुकादिकम् (उपहारादिकम्) च वराय तुभ्यं संप्रददे' इति संकल्प्य स्वहस्तस्थं सर्वं दद्यात् ।। वरश्च -'ॐ स्वस्ति रुद्राय दक्षिणां प्रतिगृह्णामि' इति प्रतिवदन् गृह्णीयात् ।।

अथ लग्नग्रन्थि (लगनगाँठो) करणम् ।। ततः कन्याप्रदपक्षीयः कोऽपि ब्राह्मणः उभयपक्षीयं यथोचितं श्वेतवस्त्रयुगलं प्रसार्य तत्प्रान्ते पूगीफलयुगलं यज्ञोपवीतयुगलं सर्षपान् कुङ्कुमाक्तान् अक्षतान् द्रव्यम् तत्समं वरपक्षीयद्रव्यम् हरिद्राखण्डद्वयं दूर्वाङ् कुराँश्च निधाय यज्ञोपवीतेन तत्प्रान्तं दृढं बध्वा कलशोपरि संस्थाप्य चन्दनाक्षतपुष्पैः प्रतिष्ठां कुर्यात् । यथा - 'ॐ एतन्ते देव सवितुर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे । तेन यज्ञमेव तेन यज्ञपतिं तेन मामव ।। ॐ भूर्भुवः स्वः अञ्चलग्रन्थे सुप्रतिष्ठो भव' इति मन्त्रेण प्रतिष्ठाप्य प्रविष्ठान्ते एव वरः वध्वाः अङ्गुष्ठम् त्यजेत् ।।

अथ कन्यापिता कन्यादानभूयसीदक्षिणासंकल्पं कुर्यात् -।। भूयसीं दक्षिणाम् उपनीय 'देयद्रव्याय नमः' इति गन्धाक्षतपुष्पैः संपूज्य सकुशतिल-यवजलां तां दक्षिणां हस्तेनाऽऽदाय- 'ॐ पूर्वसंकल्पसिद्धिरस्तु, अद्येहेत्यादि अमुकगोत्रोऽमुकराशिरमुकशर्मा सपत्नीकोऽहं कृतस्य कन्यादानकर्मणः

साङ्गतासिद्धिद्वारा श्रीलक्ष्मीनारायणप्रीतिपुरःसरं श्रुतिस्मृतिपुराणोक्तसकल-फलावाप्तये कन्यादानकर्मणः साद्गुण्यार्थम् इमां भूयसीं दक्षिणां नानानामगोत्रेभ्यो ब्राह्मणेभ्यो दीनानाथेभ्यो नटनर्त्तकगायकेभ्यः स्वमनसा कल्पितेभ्योऽन्येभ्यो दक्षिणीयेभ्यश्च यथाभागं विभज्य यथाकालेन दातुम् उत्सृजे ॐ तत्सत् न मम' इति उत्स्टज्य यथाऽर्हं दद्यात् ।। ततः पुरोहितो गन्धपुष्पादीनि आदाय- 'ब्राह्मणमद्य व्विदेयं पितृमन्तं पैतृमत्यमृषिभार्षेय ꣳसुधातु दक्षिणम । अस्मद्‌द्रा ना देवत्रा गच्छत प्रदातारमाविशत ।।१।। ॐ अग्नये त्वा मह्यं व्वरुणो ददातु सोऽमृतत्वमशीयायुर्दात्रऽएधि मयो मह्यं प्रतिग्रहीत्रे, रूद्राय त्वा मह्यं व्वरुणो ददातु सोऽमृतत्वमशीयप्राणो दात्रऽएधि व्वयो मह्यं प्रतिग्रहीत्रे, बृहस्पतये त्वा मह्यं व्वरुणो ददातु सोऽमृतत्वमशीय त्वग्दात्त्रऽएधि मयो

मह्यंप्रतिग्रहीत्रे, यमाय त्वा मह्यं व्वरुणो ददातु सोऽमृतत्वमशीय प्राणो दात्रऽएधि व्वयो मह्यं प्रतिग्रहीत्वे, बृहस्पतये त्वा मह्यं व्वरुणो ददातु सोऽमृतत्वमशीय त्वग्दात्रऽएधि मयो मह्यं प्रतिग्रहीत्रे, यमाय त्वा मह्यं व्वरुणो ददातु सोऽमृतत्वमशीय हयोदात्रऽ एधि व्वयो मह्यं प्रतिग्रहीत्रे ।।२।। ॐ कोऽदात् कस्माऽ अदात् कामोऽदात् कामायाऽदात्, कामो दाता कामः प्रतिग्रहीता कामै-तत्ते' ।।३।। इति पठन् सपत्नीकं कन्यापितरं तिलकपुष्पाभ्यामलङ्-कुर्यात् ।। तत्पश्चात् कौतुकाऽऽगारे वधूमानीय गायन्त्यो वृद्धाः वा पुरन्ध्र्यो वा कन्यासख्यः वरदत्तानि वासांसि भूषणानि च कन्यां परिधापयन्ति, सम्यक् शृङ्गारादिना भूषयन्ति तथा लग्नग्रन्थिं च ग्रन्थिभागं कन्याकट्यां बध्नन्ति अपरभागं वरग्रहणार्थे लम्बमेव मुञ्चन्ति । इमम् लग्नग्रन्थिम् चतुर्थीकर्मदिवसे मोचयन्ति ।।

अथ वरपिता कन्यापित्रा संकल्प्य दत्तां प्रत्तां (खलोखुलो) गृहीत्वा स्वस्थानं गच्छति । वरस्तु कौतुकाऽऽगारे गत्वा वस्त्रभूषणादिभिरलंकृतायाः, सखिभिरालिङ्गितायाः वध्वाः लग्नग्रन्थिलम्बप्रान्तं दक्षिणहस्तेन समादाय मण्डपाग्निसमीपं गमनाय निम्नमन्त्रं पठन् - 'यदैपीत्याथर्वण ऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवता निष्क्रमणे विनियोगः। ॐ यदैषि मनसा दूरं दिशोऽनु पवमानो वा हिरण्यपर्णो वैकर्णः स त्वा मन्मनसां करोतु असौ'।। अमुक (स्वमनोरथाऽनुसारेण वध्वाः नूतनं नाम मनसा कृत्वा) लक्ष्मीः इति सम्बुद्ध्यन्तं नाम गृहणन् , स्वदक्षिणहस्तेन वध्वाः लग्नग्रन्थिप्रान्तं गृहीत्वा कौतुकाऽ-गारतोऽग्निसमीपं गन्तुं बहिर्निष्क्रामति तत्र प्रविशति च ।।

*।। इति कन्यादानविधिः ।।*

# अथ विवाहविधिः

ततः सवधूको वरो वधूं दक्षिणतः कृत्वा वेद्याः दक्षिणे उदङ्मुख उपविशेत् । तत्र पुष्पपल्लववस्त्रभूषितं सजलं कलशं स्कन्धेन दधानः कश्चन दृढो ब्राह्मणादिः (शूद्रभिन्नः) अग्नेः दक्षिणभागे उत्तरभागे वा मौनी तिष्ठेत् ।। अथ कन्याप्रदः 'परस्परं समीक्षेथाम्' इति प्रैषं (आज्ञा) दत्त्वा वधूवरौ परस्परमीक्षयेत् । ईक्षमाणां वधूम् ईक्षमाण एव वरः- 'ॐ अघोरचक्षुरित्यादीनां चतुर्णां प्रजापतिर्ऋषिः आद्यन्तयोस्त्रिष्टुप् मध्यमयोरनुष्टुप् छन्दः कुमारी देवता परस्परैक्षणे विनियोगः।' ''ॐ अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः वीरसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे ।।१।। सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः, तृतीयोऽअग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ।।२।।

सोमो ददद्गन्धर्वाय, गन्धर्वो दददग्नये, रयिं च पुत्राँश्चादादग्निर्मह्यमथो इमाम् ।।३।। सा नः पूषा शिवतमामैरय सा न ऊरू ऽउशती विहर, यस्यामुशन्तः प्रहराम शेपं यस्यामुकामा बहवो निविष्ट्यै'' ।।४।। इति पठेत् ।। ततः वधूसहितो वरः, अग्निं प्रदक्षिणीकृत्य अग्नेः पश्चिमतः शुचिवस्त्राद्याच्छन्ने तृणकटे प्रथमं दक्षिणं चरणं निधाय वधूं दक्षिणतः कृत्वा उपविशेत् । आचम्य वरणसामग्रीं गृहीत्वा कुशादीन्यादाय ब्राह्मणं च वृणुयात् । तत्र वाक्यम् - 'पूर्वसंकल्पमुच्चार्य अमुक गोत्रः अमुक शर्माऽहं धर्मार्थकाम-सिद्धिद्वारा श्रीमत्परमेश्वरप्रीतिजननाय ब्राह्मेण विधिना पित्रा प्रदत्तया अनया कन्यकया सह करिष्यमाणे विवाहहोमकर्मणि कृताऽकृताऽवेक्षणादि ब्रह्मकर्म कर्तुम् अमुकगोत्रं अमुकशर्माणं ब्राह्मणमेभिर्गन्धाऽक्षतपुष्पधौतान्तरी-योत्तरीयाऽऽसन-जलपात्रमुद्रिक-प्रभृतिभिर्ब्रह्मत्वेन त्वां वृणे' इति वृत्वा गन्धादिभिरर्चयेत् । 'वृतोऽस्मि' इति

ब्राह्मणेनोक्ते 'यथाविहितं कर्म कुरु' इति वरो ब्रूयात्। 'करवाणि' इति च ब्राह्मणः ।

ततोऽग्नेर्दक्षिणतः शुद्धमासनं दत्त्वा तदुपरि प्रागग्रान् षट् कुशानास्तीर्य तं ब्रह्मत्वेन वृतं ब्राह्मणं पञ्चाशत्कुशमयं ब्रह्माणम् अग्निप्रदक्षिणीकरणक्रमेण आनीय 'अत्र त्वं मे ब्रह्मा भव' इति प्राङ्मुखमुपवेश्य बद्धाञ्जलिः- 'यथा चतुर्मुखो ब्रह्मा सर्वलोकपितामहः। तथा त्वं मम यज्ञेऽस्मिन् ब्रह्मा भव द्विजोत्तम ।।' इति प्रार्थयेत् ।।

ततः प्राग्वृतैर्ब्राह्मणैः कुशकण्डिकामारभ्य पञ्चवारुणीपूर्वकं चतुः-स्वस्त्यादिपर्यन्तेऽग्निस्थापनपद्धतिप्रोक्ते तत्तद्देवतापूजनहवनादिके कर्मणि, पूर्वं तदानीं वा समापिते सति- वरः कुशादीन्यादाय अमुक गोत्रः अमुक शर्मा सवधूकोऽहम् अस्मिन् विवाहकर्मणि "प्रजापतिम्, इन्द्रम्, अग्निम्, सोमम् ४, अग्निम्, वायुम्, सूर्यम् ३, अग्नीवरुणौ, अग्नीवरुणौ,

अग्निम्, वरुणम् - सवितारम् - विष्णुम् - विश्वान्देवान् मरुतः, स्वर्कान्, वरुणम् ५, ऋताषाढम्, ऋतधामानं गन्धर्वम्, ओषधीरप्सरसोमुदः स ६ हितं विश्वसामानं गन्धर्वम्, मरीचीरप्सरसऽआयुवः, सुषुम्णा ६सूर्यरश्मिँचन्द्रमसं, गन्धर्वम्, नक्षत्राण्यप्सरसो भेकुरीः इषिरं विश्वव्यचसं वातं गन्धर्वम्, अपोऽप्सरसऽऊर्ज्जः, भुज्युः सुपर्णं यज्ञं गन्धर्वम्, दक्षिणा अप्सरसस्तावाः, प्रजापतिं विश्वकर्माणं मनोगन्धर्वम्, ऋक्सामान्यप्सरसऽएष्टीः १२, चित्तम्, चित्तिम्, आकूतम्, आकूतिम्, विज्ञातम्, विज्ञातिम्, मनः, शक्वरीः, दर्शम्, पौर्णमासम्, बृहत्, रथन्तरम्, प्रजापतिम् १३, अग्निम् भूतानामधिपतिम्, इन्द्रं ज्येष्ठानामधिपतिम्, यमं पृथिव्या अधिपतिं, वायुमन्तरिक्षस्याऽधिपतिं, सूर्यं दिवोधिपतिं, चन्द्रमसं नक्षत्राणामधिपतिं, बृहस्पतिं ब्रह्मणोऽधिपतिं, मित्रं सत्यानामधिपतिम्, वरुणमपामधिपतिम्, समुद्रं स्त्रोतसामधिपतिम्, अन्नं साम्राज्यानामधिपतिम्, सोममोषधीनामधिपतिम्,

सवितारं प्रसवानामधिपतिम्, रुद्रं पशूनामधिपतिम्, त्वष्टारं रूपाणामधिपतिम्, विष्णुं पर्वतानामधिपतिम्, मरुतो गणानामधिपतीन्, पितृन् पतामहान् परानवरान् ततान् ततामहान् १८, अग्निम्, अग्निम्, अग्निम्, वैवस्वतं, मृत्युम् ५, एतान् देवान् स्वयमाचार्यद्वारा वा अर्यमणम्, अग्निम्, अग्निम्, अर्यमणम्, अग्निम्, अग्निम्, अर्यमणम् अग्निम्, अग्निम्, भगम् १०, एतान् देवान् वधूद्वारा; प्रजापतिम्, अग्निम्, स्विष्टकृतम् ५, एतौ देवौ स्वयमाचार्यद्वारा वा ४+३+५+१२+१३+१८+५+१०+२= ७२ यथार्हमाज्यलाजाभ्यां यक्ष्ये'' इत्युत्सृजेत् ।। ततः उपयमनकुशान् वामहस्ते धृत्वा प्रजापतिं मनसा ध्यायन् उत्थाय समिद्धतमेऽग्नौ पूर्वाऽऽसादितास्तिस्त्रः समिधः प्रक्षिप्य, उपविश्य सपवित्र-दक्षिणचुलुकस्थप्रोक्षण्युदकेन ईशानाद्युदग्पर्यन्तं प्रदक्षिणक्रमेण अग्निं पर्युक्ष्य, प्रणीतापात्रे पवित्रे निधाय, पातितदक्षिणजानुः कुशेन ब्रह्मणाऽन्वारब्धः स्वयमाचार्यो वा स्रुवेण

आज्याहुतीर्जुहुयात्, तत्र तत्तदाहुतिषु स्रुवाऽविशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः कर्तव्यः।। 'ॐ प्रजापतय इति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः प्रजापतिर्देवताऽऽज्यहोमे विनियोगः।' 'ॐ प्रजापतये स्वाहा, इदं प्रजापतये न मम' इति १ मनसा ।। 'ॐ इन्द्रायेति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्द इन्द्रो देवताऽऽज्यहोमे विनियोगः।' 'ॐ इन्द्राय स्वाहा, इदमिन्द्राय न मम' ।। एतौ २ आघारौ ।। 'ॐ अग्नये स्वाहा, इदमग्नये न मम' १, 'ॐ सोमाय स्वाहा इदं सोमाय न मम' २, एतावाज्यभागौ ।। 'ॐ महाव्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुभश्छन्दांसि अग्निवायुसूर्या देवता होमे विनियोगः।' 'ॐ भूः स्वाहा, इदमग्नये न मम'१, 'ॐ भुवः स्वाहा, इदं वायवे न मम' २, 'ॐ स्वः स्वाहा, इदं सूर्याय न मम' ३, 'ॐ त्वन्नोऽ अग्न इति वामदेव ऋषिस्त्रिष्टुप्छन्दोऽग्नीवरुणौ देवते आज्यहोमे विनियोगः।' 'ॐ त्वन्नोऽ अग्ने व्वरुणस्य व्विद्वान्

देवस्य हेडोऽ अवयासिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो व्विश्वा द्वेषा ꣳसि प्रमुमुग्ध्यस्मत् स्वाहा, इदमग्नीवरुणाभ्यां न मम'।।४।। 'ॐ सत्वन्न इति वामदेव ऋषिस्त्रिष्टुप्छन्दोऽग्नीवरुणौ देवते आज्यहोमे विनियोगः।' 'ॐसत्वन्नोऽअग्ने वमो भवोतीनेदिष्ठोऽअस्या उषसो व्युष्टौ। अवयक्ष्वनो व्वरुण ꣳरराणो वीहि मृडीकꣳ सुहवो नऽ एधि स्वाहा, इदमग्नीवरुणाभ्यां न मम' ।।५।। ॐ अयाश्चाग्न इति वामदेव ऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता सर्वप्रायश्चित्तहोमे विनियोगः।' 'ॐ अयाश्चाग्ने श्यनभिशस्तिपाश्च सत्त्व-मित्त्वमयाऽअसि । अयानो यज्ञं वहास्ययानो धेहि भेषजꣳ स्वाहा, इदमग्नये न मम'।।६।। 'ॐ ये ते शतमिति वामदेव ऋषिस्त्रिष्टुप्छन्दो वरुणः सविता विष्णुर्विश्वे मरुतः स्वर्का देवताः सर्वप्रायश्चित्तहोमे विनियोगः।' 'ॐ ये ते शतं व्वरुणं ये सहस्रं यज्ञियाः पाशा वितता महान्तः। तेभिर्नोऽअद्य सवितोतद् व्विष्णुर्व्विश्वे मुञ्चन्तु

मरुतः स्वर्काः स्वाहा ।। इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम' ।।७।।'ॐ उदुत्तममिति शुनःशेपऋषिस्त्रिष्टुप्छन्दो वरुणो देवता सर्वप्रायश्चित्तहोमे विनियोगः।' 'ॐ उदुत्तमं व्वरुणपाशमस्मदवाधमं व्विमध्यम ँ श्रथाय । अथावयमादित्यव्रते तवानागसोऽ अदितये स्याम ।। इदं वरुणाय न मम' ।।८।।

ततो ब्रह्माऽऽचार्यो वा वधूवरौ अभिषिञ्चेत्, तत्र मन्त्रौ- ''गणाधिनाथ-वरुण-ब्रह्मविष्णुशिवादयः । दम्पत्योः कुशलं कुर्युः पूजिता इह देवताः।। उत्सर्गे वारुणे चैव वरुणो विष्णुना सह। तुष्टिपुष्टिकरो भूयादुभयोः स्त्रीकुमारयोः ।।'' (प्रजापत्यादिहोमसाङ्गतासिद्ध्ये गोदानम्) ।।२।।

## अथ राष्ट्रभृद्-ऋताषाडादि-होमः

'ॐ ऋताषाडिति प्रजापतिर्ऋषिर्यजुः ऋताषाड्तधामाग्निर्गन्धर्वो देवता

होमे विनियोगः।' 'ॐ ऋताषाड़ृतधामाग्निर्गन्धर्वः स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा व्वाट् । इदम् ऋताषाहे ऋतधाम्ने अग्नये गन्धर्वाय न मम' ।।१।। ॐ ऋताषाडिति प्रजापतिर्ऋषिः ओषधयोऽप्सरसो मुदा देवता यजुःहोमे विनियोगः। 'ॐ ऋताषाड़ृतधामाग्निर्गन्धर्वस्तस्यौषधयोऽ-प्सरसो मुदो नाम ताभ्यः स्वाहा । इदमोषधिभ्योऽप्सरोभ्यो मुद्भ्यो न मम' ।।२।। 'ॐ सꣳहित इति प्रजापतिर्ऋषिर्यजुः सꣳहितो विश्वसामासूर्योगन्धर्वोदेवता होमे विनियोगः।' 'ॐ सꣳहितो विश्वसामा सूर्यो गन्धर्वः स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा व्वाट् । इदं सꣳहिताय विश्वसाम्ने सूर्याय गन्धर्वाय न मम' ।।३।। 'ॐ सꣳहित इति प्रजापतिर्ऋषिः यजुः मरीचयोऽप्सरसः आयुवो देवता होमे विनियोगः'।। 'ॐ सꣳहितो विश्वसामा सूर्योगन्धर्वस्तस मरीचयोऽप्सरस आयुवो नाम ताभ्यः स्वाहा ।। इदं मरीचिभ्योऽप्सरोभ्य आयुभ्यो न मम' ।।४।।

'ॐ सुषुम्ण इति प्रजापतिर्ऋषिर्यजुः सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वो देवता होमे विनियोगः।' 'ॐ सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा व्वाट् ।। इदं सुषुम्णाय सूर्यरश्मये चन्द्रमसे गन्धर्वाय न मम' ।।५।। 'ॐ सुषुम्ण इति प्रजापतिर्ऋषिः यजुः नक्षत्राण्यप्सरसो भेकुरयो देवताः होमे विनियोगः।' 'ॐ सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम ताभ्यः स्वाहा ।। इदं नक्षत्रेभ्योऽप्सरोभ्यो भेकुरिभ्यो न मम' ।।६।। 'ॐ इषिर इति प्रजापतिर्ऋषिः यजुः इषिरोविश्वव्यचावातोगन्धर्वो देवता होमे विनियोगः।' 'ॐ इषिरो विश्वव्यचा व्वातो गन्धर्वः स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा व्वाट् ।। इदम् इषिराय विश्वव्यचसे वाताय गन्धर्वाय न मम' ।।७।। 'ॐ इषिर इति प्रजापतिर्ऋषिः यजुः आपोप्सरस ऊर्जो देवता होमे विनियोगः।' 'ॐ इषिरो व्विश्वव्यचा वातो गन्धर्वस्त-

स्यापोऽप्सरस ऊर्जो नाम ताभ्यः स्वाहा ।। इदम् अद्भ्योऽप्सरोभ्य ऊग्भ्र्यो न मम' ।।८।। 'ॐ भुज्युरिति प्रजापतिर्ऋषिर्यजुः सुपर्णो यज्ञो गन्धर्वो देवता होमे विनियोगः।' 'ॐ भुज्युः सुपर्णो यज्ञो गन्धर्वः स नऽइदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा व्वाट् ।। इदं भुज्यवे सुपर्णाय यज्ञाय गन्धर्वाय न मम' ।।९।। 'ॐ भुज्युरिति प्रजापतिर्ऋषिः यजुः दक्षिणाप्सरस्तावा देवता होमे विनियोगः।' 'ॐ भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसस्तावा नाम ताभ्यः स्वाहा ।। इदं दक्षिणाभ्योप्सरोभ्यस्तावाभ्यो न मम' ।।१०।। 'ॐ प्रजापतिरिति प्रजापतिर्ऋषिर्यजुः प्रजापतिर्विश्वकर्मा मनो गन्धर्वः स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा व्वाट्। इदं प्रजापतये विश्वकर्मणे मनसे गन्धर्वाय न मम ।।११।। 'ॐ प्रजापतिरिति प्रजा-पतिर्ऋषिः यजुः-ऋक्सामान्यप्सरस इष्टयो देवता होमे विनियोग।' 'ॐ प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्य

ऋक्सामान्यप्सरस एष्टयो नाम ताभ्यः स्वाहा ।। इदम् ऋक्सामभ्योप्सरोभ्य एष्टिभ्यो न मम' ।।१२।। इति राष्ट्रभृद्धोमः ।। राष्ट्रभृद्धोमसाङ्गतासिद्धये गोदानम् ।। ततो वधूवरौ अभिषिञ्चेत् एतैर्मन्त्रैः- 'ॐ ऋताषाडाद्याहुतिभिर्दद्यात् प्रीतो हुताशनः। आयुर्दीर्घं च सौख्यं च पुत्रपौत्रप्रवर्धनम् ।।१।। उत्सवे वारुणे चैव वरुणो विष्णुदेवता । कुरुतां सुखसौभाग्यमुभौ तावनयोर्द्वयम् ।।२।। पञ्चानां लोकपालानामृषीणां च ध्रुवस्य च । यत् कल्याणं तदनयोर्दद्यात् प्रीतो हुताशनः।।३।। गन्धर्वाप्सरसश्चैव प्रयच्छन्तु यशः श्रियम् । दीर्घमायुस्तथाऽऽरोग्यमुभयोर्वरकन्ययोः।।४।।

## अथ जयहोमः

'ॐ चित्तं चेति परमेष्ठी ऋषिः चित्तं देवता यजुः जयहोमे विनियोगः।' 'ॐ चित्ताय स्वाहा - इदं चित्ताय न मम' ।।१।। 'ॐ चित्तिश्च

स्वाहा- इदं चित्त्यै न मम' ।।२।। 'ॐ आकूतं चेति परमेष्ठी ऋषिः आकूतं देवता यजुर्होमे विनियोगः।' 'ॐ आकूताय स्वाहा – इदमाकूताय न मम' ।।३।। 'ॐ आकूतिश्चेति परमेष्ठी ऋषिः आकूतिर्देवता यजुर्होमे विनियोगः।' 'ॐ आकूत्यै स्वाहा - इदमाकूत्यै न मम'।।४।। 'ॐ विज्ञातं चेति परमेष्ठी ऋषिर्विज्ञातं देवता यजुर्होमे विनियोगः।' 'ॐ विज्ञाताय स्वाहा - इदं विज्ञाताय न मम' ।।५।। 'ॐ विज्ञातिश्चेति परमेष्ठी ऋषिर्विज्ञातिर्देवता यजुर्होमे विनियोगः।' 'ॐ विज्ञात्यै स्वाहा- इदं विज्ञात्यै न मम' ।।६।। 'ॐ मनश्चेति परमेष्ठी ऋषिर्मनो देवता यजुर्होमे विनियोगः ।' 'ॐ मनसे स्वाहा – इदं मनसे न मम' ।।७।। 'ॐ शक्वरीश्चेति परमेष्ठी ऋषिः शक्वरी देवता यजुर्होमे विनियोगः।' 'ॐ शक्वर्यै स्वाहा –इदं शक्वर्यै न मम' ।।८।। 'ॐ दर्शश्चेति

परमेष्ठी ऋषिर्दर्शोदेवता यजुर्होमे विनियोगः।' 'ॐ दर्शाय स्वाहा – इदं दर्शाय न मम' ।।९।। 'ॐ पौर्णमासं चेति परमेष्ठी ऋषिः पौर्णमासं देवता यजुर्होमे विनियोगः।' 'ॐ पौर्णमासाय स्वाहा – इदं पौर्णमासाय न मम' ।।१०।। 'ॐ बृहच्चेति परमेष्ठी ऋषिर्बृहद्देवता यजुर्होमे विनियोगः।' 'ॐ बृहते स्वाहा – इदं बृहते न मम' ।।११।। 'ॐ रथन्तरं चेति परमेष्ठी ऋषी रथन्तरं देवता यजुर्होमे विनियोगः।' 'ॐ रथन्तराय स्वाहा – इदं रथन्तराय न मम' ।।१२।। 'ॐ प्रजापतिरिति परमेष्ठी ऋषिस्त्रिष्टुप्छन्दः प्रजापतिर्देवता जयहोमे विनियोगः।' 'ॐ प्रजापति-र्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतना जयेषु । तस्मै विशः समनमन्त सर्वाः स उग्रः स इ हव्यो बभूव स्वाहा ।। ॐ प्रजापतये स्वाहा – इदं प्रजापतये न मम' ।।१३।। इति जयहोमः ।। अत्रापि जयहोमसङ्गतासिद्ध्ये गोदानं कुर्वन्ति।। ततो वधूवरौ अभिषिञ्चेत्, तत्र मन्त्रौ -

''वधूवराभ्यां यच्छन्तु होमेनाऽनेन तर्पिताः । चिरमायुर्महत्त-
जश्चित्ताद्यास्त्रिदिवौकसः ।।१।। गौरी लक्ष्मीस्तथेन्द्राणी लोपामुद्रा शुभप्रदा ।
कुर्युः सदाचारवतीं स्वतुल्यां कन्यकामिमाम्' ।।२।।

## अथ अभ्यातानहोमः

'ॐ अग्निर्भूतानामिति प्रजापतिर्ऋषिरग्निर्देवता पङ्क्तिश्छन्दः अभ्यातानहोमे विनियोगः।' 'ॐ अग्निर्भूतानामधिपतिः स मा वत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देववहूत्या ँस्वाहा' - 'ॐ इदमग्नये भूतानामधिपतये न मम'।।१।। 'ॐ इन्द्रो ज्येष्ठानामिति प्रजापतिर्ऋषिरिन्द्रोज्येष्ठानामधिपतिर्देवता पङ्क्तिश्छन्दः अभ्यातानहोमे विनियोगः।' 'ॐ इन्द्रो ज्येष्ठानामधिपतिः स मा वत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्या ँस्वाहा ।।' 'ॐ इदमिन्द्राय ज्येष्ठानामधिपतये न मम' ।।२।। 'ॐ

यमः पृथिव्या इति प्रजापतिर्ऋषिर्यमः पृथिव्या अधिपतिर्देवता पङ्क्तिश्छन्दः अभ्यातानहोमे विनियोगः।।' 'ॐ यमः पृथिव्या अधिपतिः स मा वत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्या ᳪस्वाहा ।। इदं यमाय पृथिव्या अधिपतये न मम' ।।३।। अत्र प्रणीतोदकस्पर्शः ।। 'ॐ वायुरिति प्रजापतिर्ऋषिर्वायुरन्तरिक्षस्याधिपतिर्देवता पङ्क्तिश्छन्दः अभ्यातानहोमे विनियोगः।' 'ॐ वायुरन्तरिक्षस्याधिपतिः स मा वत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायास्मिन्कर्मण्यस्यां देवहूत्या ᳪ स्वाहा ।। इदं वायवेऽन्तरिक्षस्याधिपतये न मम' ।।४।। 'ॐ सूर्योदिवोऽधिपतिरिति प्रजापतिर्ऋषिः सूर्योदिवोऽधिपतिर्देवता पङ्क्तिश्छन्दः अभ्यातानहोमे विनियोगः।' 'ॐ सूर्योदिवोऽधिपतिः स मा वत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्या ᳪस्वाहा ।। इदं सूर्याय दिवोऽधिपतये

न मम' ।।५।। 'ॐ चन्द्रमा नक्षत्राणामधिपतिः प्रजापतिर्ऋषिः नक्षत्राणामधिपतिर्देवता पङ्क्तिश्छन्दः अभ्यातानहोमे विनियोगः।' 'ॐ चन्द्रमा नक्षत्राणामधिपतिः स मा वत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्या-माशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्या ॐस्वाहा ।। इदं चन्द्रमसे नक्षत्राणामधिपतये न मम' ।।६।। 'ॐ बृहस्पतिरिति प्रजापतिर्ऋषि-र्बृहस्पतिर्ब्रह्मणोऽधिपतिर्देवता पङ्क्तिश्छन्दः अभ्यातानहोमे विनियोगः।' 'ॐ बृहस्पतिर्ब्रह्मणोऽधिपतिः स मा वत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽ-स्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्या ॐस्वाहा ।। इदं बृहस्पतये ब्रह्मणोऽधिपतये न मम' ।।७।। 'ॐ मित्र इति प्रजापतिर्ऋषिर्मित्रः सत्यानामधिपतिर्देवता पङ्क्तिश्छन्दः अभ्यातानहोमे विनियोगः।' 'ॐ मित्रः सत्यानामधिपतिः स मा वत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्या ॐस्वाह ।।

इदं मित्राय सत्या-नामधिपतये न मम' ।।८।। 'ॐ वरुण इति प्रजापतिर्ऋषिर्वरुणोऽ-पामधिपतिर्देवता पङ्क्तिश्छन्दः अभ्यातानहोमे विनियोगः।' 'ॐ वरुणोऽ-पामधिपतिः स मा वत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायाम-स्मिन् कर्म्मण्यस्यां देवहूत्या ᳪ स्वाहा ।। इदं वरुणायाऽपामधिपतये न मम' ।।९।। 'ॐ समुद्र इति प्रजापतिर्ऋषिः समुद्रः स्रोत्यानामधिपतिर्देवता पङ्क्तिश्छन्दः अभ्यातानहोमे विनियोगः।' 'ॐ समुद्रः स्रोत्यानामधिपतिः स मा वत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्या ᳪ स्वाहा ।। इदं समुद्राय स्रोत्यानामधिपतये न मम' ।।१०।। 'ॐ अन्नमिति प्रजापतिर्ऋषिरन्न ᳪ साम्राज्यानामधिपतिर्देवता पङ्क्तिश्छन्दः अभ्यातानहोमे विनियोगः।' 'ॐ अन्न ᳪ साम्राज्यानामधिपति-स्तन्मावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्या ᳪ

स्वाहा ।। इदमन्नाय साम्राज्यानामधिपतये न मम' ।।११।। 'ॐ सोम इति प्रजापतिर्ऋषिः सोम ओषधीनामधिपतिर्देवता पङ्क्तिश्छन्दः अभ्यातानहोमे विनियोगः।' ॐ सोम ओषधीनामधिपतिः स मा वत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्या ᳪस्वाहा ।। इदं सोमायौषधीनामधिपतये न मम' ।।१२।। 'ॐ सवितेति प्रजापतिर्ऋषिः सविता प्रसवानामधिपतिर्देवता पङ्क्तिश्छन्दः अभ्यातानहोमे विनियोगः।' 'ॐ सविता प्रसवानामधिपतिः स मा वत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्या ᳪस्वाहा ।। इदं सवित्रे प्रसवानामधिपतये न मम' ।।१३।। 'ॐ रुद्र इति प्रजापतिर्ऋषिः रुद्रः पशूनामधिपतिर्देवता पङ्क्तिश्छन्दः अभ्यातानहोमे विनियोगः।' 'ॐरुद्रः पशूनामधिपतिः स मा वत्वस्मिन् ब्रह्मण्यस्मिन क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्या ᳪस्वाहा ।।

इदं रुद्राय पशूनामधिपतये न मम'।।१४।। अत्र प्रणीतोद-कस्पर्शः।।
'ॐ त्वष्टेति प्रजापतिर्ऋषिस्त्वष्टा रूपाणामधिपतिर्देवता पङ्क्तिश्छन्दः
अभ्यातानहोमे विनियोगः।' 'ॐ त्वष्टा रूपाणामधिपतिः स मा वत्वस्मिन्
ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्या
ंस्वाहा ।। इदं त्वष्ट्रे रूपाणामधिपतये न मम' ।।१५।।'ॐ विष्णुरिति
प्रजापतिर्ऋषिर्विष्णुः पर्वतानामधिपतिर्देवता पङ्क्तिश्छन्दः अभ्यातानहोमे
विनियोगः।' 'ॐविष्णुः पर्वतानामधिपतिः स मा वत्वस्मिन् ब्रह्मण्यस्मिन्
क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्म्मण्यस्यां देवहूत्या
ंस्वाहा ।। इदं विष्णवे पर्वतानामधिपतये न मम' ।।१६।। 'ॐ
मरुत इति प्रजापतिर्ऋषिर्मरुतो गणानामधिपतयो देवता पङ्क्तिश्छन्दः
अभ्यातानहोमे विनियोगः।' 'ॐ मरुतो गणानामधिपतयस्ते मा वत्वस्मिन्
ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्या

ंस्वाहा ।। इदं मरुद्भ्यो गणानामधिपतिभ्यो न मम' ।।१७।। 'ॐ पितर इति प्रजापतिर्ऋषिः पितरः पितामहाः परेऽवरे ततास्ततामहा देवताः पङ्क्तिश्छन्दः अभ्यातानहोमे विनियोगः।' 'ॐ पितरः पितामहाः परेऽवरे ततास्ततामहा इह मा वत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्या ंस्वाहा ।। इदं पितृभ्यः पितामहेभ्यस्ततेभ्यस्ततामहेभ्यो न मम'।।१८।। अत्र प्रणीतोदकस्पर्शः ।। अत्रापि अभ्यातानहोम-साङ्गतासिद्धये गोदानं कुर्यात् ।। ततो वधूवरौ अभिषिञ्चेत् ।। तत्र मन्त्रौ -

ॐ ब्रह्मा विष्णुस्तथा रुद्रो गुरुः शुक्रश्च भार्गवः ।
आयुर्दीर्घं च सौख्यं च प्रयच्छन्त्वनयोर्द्वयोः ।।१।।
अग्निर्भूरपि यज्ञेऽस्मिन् श्रीधरश्च श्रिया सह ।
दद्युः पुत्रान् सुखं लक्ष्मीं सौभाग्यमपि सर्वदा ।।२।।

## अथ गुप्ताहुतयः

वधूवरयोः पुरस्तात् प्रसारितेन पटेन वह्निं व्यवधाय - 'ॐ अग्निरैतु इत्यादीनां चतुर्णां मन्त्राणां प्रजापतिर्ऋषिः पञ्चानामपि त्रिष्टुप् छन्दः लिङ्गोक्ता देवता आज्याऽऽहुतिहोमे गुप्ताऽऽहुतिहोमे च विनियोगः।' 'ॐ अग्निरैतु प्रथमो देवतानाᳬं सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् । तदयᳬ राजा व्वरुणोऽनुमन्यतां यथेयᳬं स्त्री पौत्रमघं न रोदात् स्वाहा ।। इदमग्नये न मम' ।।१।। 'ॐ इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः। अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिविबुध्यतामियᳬं स्वाहा ।। इदमग्नये न मम' ।।२।। 'ॐ स्वस्ति नोऽ अग्ने दिव आ पृथिव्या विश्वानि धेह्ययथा यजत्र । यदस्यां महि दिवि जातं प्रशस्तं तदस्मासु द्रविणं धेहि चित्रᳬं स्वाहा ।। इदमग्नये न मम' ।।३।। 'ॐ सुगन्नु

पन्थां प्रदिशन्नऽएहि ज्योतिष्मद्धेह्यजरन्न आयुः । अपैतु मृत्युरमृतं न आगा द्वैवस्वतो नो ऽअभयं कृणोतु स्वाहा ।। इदं वैवस्वताय न मम' ।।४।। अत्र प्रणीतोदक-स्पर्शः ।। 'ॐ परं मृत्योऽ अनु परेहि पन्थां यस्तेऽअन्य ऽइतरो देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि मानः प्रजा ᳪरीरिषो मोत व्वीरान् स्वाहा ।। मृत्यवे न मम ।।५।। अत्र प्रणीतोदकस्पर्शः।। इति गुप्ताहुतिः।। अत्राऽपि गुप्ताहुतिसाङ्गतासिद्धये गोदानं कुर्वन्ति ।। प्रसारितं वस्त्रमुत्तार्य वधूवरौ अभिषिञ्चेत् पुरोहितः।। तत्र मन्त्रः- 'ॐ गोविन्दो गोकुले तिष्ठन् गोपीभिर्विहरन् सह । तुष्टिपुष्टिकरो भूयादनयोर्वरकन्ययोः।। इति ।।

## अथ लाजहोमः

तत्प्रकारश्च । वधूर्वेद्याः पश्चिमतः प्राङ्मुखीभूय तिष्ठेत्, तस्या वामतो

वरस्तिष्ठेत्, घृताभिधारितानां शमीपलाशमिश्रितानां शूर्पे चतुर्भागतया पृथक् स्थापितानां लाजानां मध्ये, प्रथमभागतः भ्रात्रा अञ्जलिना प्रदत्तान् लाजान् अञ्जलौ गृहीत्वा, वरेण अन्वारब्धा वधूर्मन्त्रं पठित्वा त्रिवारं त्रिवारं जुहुयात् । तत्र मन्त्राः- 'अर्यमणमित्याथर्वण ऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवता लाजहोमे विनियोगः।' 'ॐ अर्यमणं देवं कन्या अग्निमयक्षत । स नो अर्यमा देवः प्रेतो मुञ्चतु मा पतेः स्वाहा ।। 'ॐ इदमर्यम्णे न मम' ।।१।। इति प्रथमाऽऽहुतौ हुतायाम्, पुनः प्रथमभागतो भ्रात्रा दत्तान् लाजान् अञ्जलौ गृहीत्वा-'ॐ इयं नार्युपब्रूते लाजानावपन्तिका' आयुष्मानस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा ।।' 'ॐ इदमग्नये न मम' ।।२।। इति द्वितीयाऽऽहुतौ हुतायां, प्रथमभागतो भ्रात्रा दत्तान् लाजान् गृहीत्वा पुनः- 'ॐ इमाँल्लाजानावपाम्यग्नौ समृद्धिकरणं तव । मम तुभ्यं च संवननं तदग्निरनुमन्यतामिय ंस्वाहा।।' 'ॐ

इदमग्नये न मम' इति जुहुयात् ।।३।। ततो वरः वध्वाः दक्षिणहस्ताऽङ्गुष्ठं गृहीत्वा चतुरः मन्त्रान् पठेत्, तत्र मन्त्राः-"ॐ गृहणामीत्यादीनां चतुर्णां याज्ञवल्क्यभरद्वाजाथर्वणप्रजापतय ऋषयस्त्रिष्टुपुष्णिगनुष्टुब्ब्यजुश्छन्दांसि पाणिग्रहणे विनियोगः।' 'ॐ गृहणामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथाऽऽसः । भगो अर्य्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्हपत्याय देवाः।।१।। ॐ अमोऽहमस्मि सा त्वꣳ सा त्वमस्यमोऽहम्, सामाहमस्मि ऋक् त्वं द्यौरहं पृथिवी त्वम् ।।२।। तावेहि विवहावहै सह रेतो दधावहै प्रजां प्रजनयावहै पुत्रान् विन्दावहै बहून् ।।३।। ते सन्तु जरदष्टयः सम्प्रियौ रोचिष्णू सुमनस्यमानौ, पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतम्"।।४।।

ततोऽग्नेरुत्तरतः प्राङ्मुखीं वधूं कृत्वा पूर्वोपकल्पितायां ससिन्दूर-रेखात्रयायां शिलायां वध्वा दक्षिणं पादाऽङ्गुष्ठं स्वदक्षिणकरेण गृहीत्वा

मन्त्रं पठन् आरोहयेत् वरः। तत्र मन्त्राः- "ॐ आरोहेममश्मानमित्याथर्वण ऋषिः अनुष्टुप्छन्दो वधूर्देवता अश्मारोहणे विनियोगः।" 'ॐ आरोहेममश्मानमश्मेव त्वꣳ स्थिरा भव । अभितिष्ठ पृतन्यतो बबाधस्व पृतनायतः।।' इति तस्यामारूढायां पुनः पठेद्वरः। 'ॐ सरस्वतिप्रेदमिति विश्वामित्र ऋषिः सरस्वती देवताऽनुष्टुप्छन्दः गाथागाने विनियोगः।' 'ॐ सरस्वति प्रेदमव सुभगे वाजिनीवति । यां त्वा विश्वस्य भूतस्य प्रजायामस्याग्रतः। यस्यां भूतꣳ समभवद्यस्यां विश्वमिदं जगत्, तामद्य गाथां गास्यामि या स्त्रीणामुत्तमं यशः।। इति ।। ततो वरः वधूमग्रतः कृत्वा मन्त्रं पठन् प्रदक्षिणमग्निं परिक्रामेत् । तत्र मन्त्रः- "ॐ तुभ्यमग्न इत्याथर्वण ऋषिरग्निर्देवताऽनुष्टुप्छन्दः परिक्रमणे विनियोगः ।" "ॐ तुभ्यमग्ने पर्यवहन्त्सूर्यां वहतु ना सह, पुनः पतिभ्यो जायां दाऽग्ने प्रजया सह ।।" इति परिक्रम्य पूर्वं स्थानमागत्य पूर्ववत् समन्त्रपाठं वधूवरौ

लाजहोमम्, अङ्गुष्ठग्रहणम्, अश्मारोहणम्, गाथागानम्, अग्निपरिक्रमणं च द्विवारं कुर्याताम् ।। एवं तृतीयपरिक्रमणे समापिते भ्रात्रा दत्तस्य शूर्पस्य कोणेन सर्वानेव लाजान् समन्त्रपाठं जुहुयात् ।। तत्र मन्त्रः - 'ॐ भगायेति मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दो भगो देवता लाजहोमे विनियोगः।' ''भगाय स्वाहा'' इति हुते 'ॐ भगाय न मम' इति वरो ब्रूयात् ।। ततस्तूष्णीं चतुर्थं परिक्रमणम् । तत्र आचाराद्वधूवरौ पूर्वप्रकल्पितां शिलामारोहणक्रमेण गन्धाक्षतपुष्पाण्यादाय पूजयेतामेभिर्मन्त्रैः - ''तमालपुष्पप्रतिमाङ्गि ! मातः!, सनालनीलोत्पलयुग्महस्ते !। स्फुरत्सरस्वद्-बृहदम्बरे ! त्वं, धरे ! समागच्छ वरं प्रदातुम् ।। ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री, पृथिवीं यच्छ पृथिवीं दृᳪ ह पृथिवीं मा हिᳪ सीः।। मातरं वसुधां देवीं पितरं च महेश्वरम् । आवां प्रपन्नौ स्वः कामान् प्राप्नुयाव यथेप्सितान् ।।१।। 'ॐ अश्मा च मे

मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यं च मेऽयश्च मे श्यामं च मे लोहं च मे सीसं च मे त्रपु च मे यज्ञेन कल्पन्ताम् ।।२।। देहल्यां स्थापिता सेयं भक्तितोऽभ्यर्चिता शिला । ददातु विपुलान् भोगान् पुत्रपौत्रादिसंयुतान् ।। 'ॐ स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन् । पृथुर्भव सुखदस्त्वमग्नेः पुरीषवाहणः ।।३।। इति ।।

ततो वर उपविश्य ब्रह्मणाऽन्वारब्धः प्रजापतिं ध्यायन् आज्येन जुहुयात् । तत्र मन्त्रः- 'ॐ प्रजापतय इति प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दः प्रजापतिर्देवता आज्यहोमे विनियोगः।' ''ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम ।।'' हुतशेषस्य आज्यस्य प्रोक्षणीपात्रे प्रक्षेपः ।। ततो वधूवरौ यथास्थानमागत्य उपविशेताम् । अत्रापि लाजहोमसाङ्गतासिध्यर्थं वध्वा गोदानं कारयन्ति।।

ततोऽष्टदिक्षु वस्त्रोपरि निम्नवत् पुञ्जीकृतैस्तण्डुलैर्लाजैर्वा प्रकल्पितान् अष्टौ पर्वतान् पूजयेताम् वधूवरौ।।

## अथ पर्वत-पूजनम् ।।




वधूवरौ गन्धाक्षतपुष्पाद्यैः क्रमशः पूजयेताम् । तत्र मन्त्राः- [१]. सुमेरुं काञ्चनमयं चतुःशृङ्गविराजितम् । मण्डलस्योत्तरे भागे चन्द्रमा इति पूजयेत् ।। ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्यो ऽअजायत । श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ।। ॐ सुमेरुपर्वताय नमः।।१।। [२] शिखरं च महादेवं पाण्डुरं हेमभूषितम् । ये ते शतमितीशाने विदिग्भागे प्रपू- जयेत् ।। ॐ ये ते शतं व्वरुणं ये सहस्रं यज्ञियाः

पाशा वितता महान्तः । तेभिर्न्नो ऽअद्य सवितोत व्विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्क्काः स्वाहा ।। ॐ शिखराय नमः ।।२।। [३] उदयं पर्वतं पीतरक्तश्वेतं विभूषितम् । त्रातारमिति मन्त्रेण साधिष्ठातारमर्चये ।। ॐ त्रातारमिन्द्रम-वितारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रम् । ह्वयामि शक्रं पुरुहूतमिन्द्र ꣳस्वस्ति नो मघवा धात्विन्द्रः ।। 'ॐ उदयाचलाय नमः ।।३।। [४] समुन्नतं कृष्णवर्णं मरुतं नाम पर्वतम् । आग्नेय्यां स्थितमत्युग्रं मरुत्वानिति पूजये ।। ॐ मरुत्वाँऽ।। इन्द्र वृषभो रणाय पिबा सोम मनुष्यधम्म-दाय । आसिञ्चस्व जठरे मद्ध्वऽऊर्मिन्त्वꣳ राजासि प्रतिपत्सुतानाम् । उपयाम गृहीतोसीन्द्रायत्वामरुत्वतऽएष ते योनिरिन्द्राय त्वा मरुत्वते ।। ॐ मरुताय नमः।।४।। [५] आरक्तश्वेतवपुषं दक्षिणस्यां दिशि स्थितम् । धामच्छदिति मन्त्रेण विन्ध्यं पर्वतमर्चये ।। ॐ धामच्छदग्निरिन्द्रो ब्रह्मा देवी बृहस्पतिः। सचेतसो विश्वेदेवा यज्ञं प्रावन्तुनः

शुभे ।। ॐ विन्ध्याचलाय नमः ।।५।। [६] नैर्ऋत्यामुषितं तुङ्गं मणिहेमादिभूषितम् । हिरण्यगर्भमन्त्रेण हिमवन्तं समर्चये ।। ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकऽ-आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ।। ॐ हिमाचलाय नमः।।६।। [७] पाण्डवैर्गुप्तचर्यार्थमाश्रितं पश्चिमे स्थितम् । धन्वनागेति मन्त्रेण वैराटं गिरिमर्चये ।। ॐ धन्वनागा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम । धनुः शत्रोरपक्रामङ्कृणोति धन्वना सर्वाः प्रदिशो जयेम ।। ॐ वैराटाय नमः ।।७।। [८] शारदं शुभ्रवर्णाढ्यं ज्ञानदं करुणायुतम् । वायव्यां दिशि वायव्यैर्व्वायव्यानिति पूजये ।। ॐ व्वायव्यैर्व्वायव्यान्याप्नोति स तेन द्रोणकलशम् । कुम्भीभ्यामम्भृणौ सुते स्थालीभिः स्थालीराप्नोति ।। ॐ शारदाय नमः ।।८।।

## अथ सप्तपदी (सातोटा प्रबल प्रतिज्ञा)

वेद्या उत्तरोत्तरतः आस्तृते वस्त्रे सिन्दूरादिभिः सप्त मण्डलानि कृत्वा, वधूम् उदङ्मुखीम् उत्थितां कृत्वा, तस्या दक्षपादाऽङ्गुष्ठं दक्षहस्तेन गृहीत्वा वरः सप्तपदानि क्रमेण समन्त्रपाठं क्रामयेत् । तत्र मन्त्राः- 'ॐ एकमिष इत्यादिसप्तानां प्रजापतिर्ऋषिर्यजुर्लिङ्गोक्ता देवता सप्तपदाक्रमणे विनियोगः।' 'ॐ एकमिषे विष्णुस्त्वा नयतु' (१) इति प्रथमे पदाक्रमणे मन्त्रः।। 'ॐ द्वे ऊर्जे विष्णुस्त्वा नयतु' (२) इति द्वितीये०।। 'ॐत्रीणि रायस्पोषाय विष्णुस्त्वा नयतु' (३) इति तृतीये०।। 'ॐ चत्वारि मायोभवाय विष्णुस्त्वा नयतु' (४) इति चतुर्थे०।। 'ॐ पञ्च पशुभ्यो विष्णुस्त्वा नयतु' (५) इति पञ्चमे ।। 'ॐ षड्ऋतुभ्यो विष्णुस्त्वा नयतु' (६) इति षष्ठे ।। 'ॐसखे सप्तपदा भव सा मामनुव्रता भव विष्णुस्त्वा नयतु ।।७।। इति सप्तमे मन्त्रः।। ततस्तेषु सप्तसु मण्डलेषु क्रमेण सप्तऋषीन् वधूवरौ

गन्धाक्षतपुष्पैः पूजयेताम् ।। तत्र मन्त्राः- "अत्रिं मुनिं सपत्नीकमावाह्य प्रथमे पदे । पत्न्याऽनयाऽभिनवया संयुक्तः पूजयाम्यहम् ।। 'ॐ आदित्यङ्गर्भं पयसा समङ्ग्धि सहस्रस्य प्रतिमां विश्वरूपम् । परिवृङ्ग्धि हर सा मा भिमꣳ स्थाः शतायुषं कृणुहि चीयमानः ।। ॐ अत्रये नमः" ।।१।। "पदे द्वितीये सूर्येन्दुरूपं पत्नीसमन्वितम् । मुनिं वसिष्ठमावाह्य सदारः पूजयाम्यहम् ।। 'ॐ वातो वा मनो वा गन्धर्वः सप्तविꣳ शतिः । तेऽअग्रेश्वमयुजस्तेऽअस्मिञ्जवमादधुः ।। ॐ वसिष्ठाय नमः" ।।२।। "पदे तृतीयेऽङ्गिरसं मुनिवर्गसमर्चितम् । दम्पत्योर्जयदातारं सदारः पूजयाम्यहम् ।। ॐ गायत्री त्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्या सह । बृहत्युष्णिहा ककुप्सूचीभिः शम्यन्तु त्वा ।। ॐ अङ्गिरसे नमः" ।।३।। "उद्भावितहरिश्चन्द्रमहिमानं मुनीश्वरम् । पदे चतुर्थे गाधेयं सदारः पूजयाम्यहम् ।। "ॐ अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं

रत्नधातमम् ।। ॐ विश्वामित्राय नमः'' ।।४।। ''पराशरसुतं व्यासं मत्स्यगर्भात् समुद्भवम् । पञ्चमेऽत्र पदे प्रोतः सदारः पूजयाम्यहम् ।। ''ॐ सोमो धेनुꣳ सोमोऽ अर्वन्तमासुसोमो व्वीरङ्कर्म्मण्यं ददाति । सादन्यं विदथ्यꣳ सभेयं पितृश्रवणं यो ददाशदस्मै ।। ॐ व्यासाय नमः'' ।।५।। ''षष्ठे पदे भरद्वाजं मुनिं षडर्तुविग्रहम् । आवाह्य यज्ञरक्षार्थे सदारः पूजयाम्यहम् ।। ॐ वसन्तेनऽऋतुना देवा वसवस्त्रिवृताः स्तुताः ।। रथन्तरेण तेजसा हविरिन्द्रे व्वयो दधुः ।। ॐ भरद्वाजाय नमः'' ।।६।। ''सप्तमेऽत्र पदे शम्भोरंशभूतं मुनीश्वरम् । दुर्वाससं शुभाऽवाप्त्यै सदारः पूजयाम्यहम् ।। 'ॐ सप्त ऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् । सप्तापः स्वपतो लोकमीयुस्तत्र जाग्रतोऽअस्वप्नजौ सत्रसदौ च देवौ ।। ॐ दुर्वाससे नमः'' ।।७।। इत्थं संपूज्य वधूवरौ सप्तब्राह्मणान् दक्षिणाभोजनादिभिः सन्तोषयेताम् ।। अस्मिन्नवसरे राजवंशविरुदावलिवेत्ता

कश्चन ओजस्वी क्षत्रियादिः पुरुषः खड्गमुन्नीय साभिनिवेशं राजविजय-प्रशस्तिमुच्चैर्गायेदिति इदं राजविजयप्रशस्तिगानं 'खाँडो जगाउनु' इति नाम्ना व्यपदिश्यते ।। गोरक्षदेशाचारः।।इति सप्तपदी ।।

ततो वरः सपत्नीकोऽग्नेः पश्चिमतः स्थित्वा मौनिपुरुषस्कन्धस्थित-कलशजलेन साम्रपल्लवेन वधूं मूर्धन्यभिषिञ्चेत् ।। तत्र मन्त्राः- 'ॐ आप इति प्रजापतिर्ऋषिर्लिङ्गोक्ता देवता यजुर्मूर्धाभिषेचने विनियोगः।' 'ॐ आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजम् ।।' इति ।। पुनः 'ॐ आपोहिष्ठेतित्र्यृचस्य सिन्धुद्वीपऋषिर्गायत्री छन्द आपो देवता वधूमूर्धाभिषेके विनियोगः।' 'ॐ आपोहिष्ठा मयो भुवः, तानऽऊर्जे दधातनः, महेरणाय चक्षसे ।।१।। यो वः शिवतमो रसस्तस्य भाजयतेह नः, उशतीरिव मातरः ।।२।। तस्माऽअरङ्गमामवो यस्य क्षयाय जिन्वथ, आपो जन यथा च नः।। इति अभिषेक मन्त्राः।।

अथ दिवा विवाहे वरः वधूं 'सूर्यमुदीक्षस्व' इति प्रैषेण (करले) सूर्यं दर्शयेत्। तत्र मन्त्रं स्वयं पठेत् - 'ॐ तच्चक्षुरिति दध्यङ्ङाथर्वण ऋषिः ब्राह्मी त्रिष्टुप् छन्दः सूर्यो देवता सूर्योदीक्षणे विनियोगः।' 'ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात्।।इति।। 'उदैक्षिषि' इति कन्या ब्रूयात् ।। रात्रौ विवाहे तु 'ध्रुवमुदीक्षस्व' इति वरो ध्रुवं दर्शयेत्, मन्त्रं च स्वयं पठेत् - 'ॐ ध्रुवमसीति प्रजापतिर्ऋषिर्ध्रुवो देवता पङ्क्तिश्छन्दः ध्रुवोदीक्षणे विनियोगः।' 'ॐ ध्रुवमसि ध्रुवं त्वा पश्यामि ध्रुवैधि पोष्ये मयि । मह्यं त्वादाद्बृहस्पतिर्मया पत्या प्रजावती सञ्जीव शरदः शतम् ।। इति ।। वधूश्च ध्रुवमवीक्षमाणाऽपि 'उदीक्षे' इति ब्रूयात् ।

अथ वरः वध्वाः दक्षिणस्कन्धतो हस्तं नीत्वा तस्याः हृदयमालभेत ।

तत्र मन्त्रः- 'ॐ मम व्रत इति मन्त्रस्य प्रजापतिर्ऋषिर्देवता च त्रिष्टुप्छन्दः वधुहृदयालम्भने विनियोगः ।' ''ॐ मम व्रते ते हृदयं दधामि मम चित्तं तेऽअस्तु, मम वाचमेकमना जुषस्व प्रजापतिस्त्वा नियुनक्तु मह्यम्'' ।।इति।।

## अथ सिन्दूरार्पणम्

सिन्दूरार्पणविधानं कन्यापक्षीयाः पितृबान्धवा न पश्येयुरिति शिष्टाचारः ।। ऐशान्यां स्थापिताद् गणेशादारभ्य वधूसीमन्त (सिउँदो) पर्यन्तं उभयपक्षीये वस्त्रद्वये सधवाभ्यां वा कन्याभ्यां प्रसारिते सति, वर उत्थाय सिन्दूरपात्रं वामहस्तेन धृत्वा, गणेशादिभ्यो देवताभ्यः सिन्दूरं समर्प्य त्रिरुत्क्षिप्य गणेशात् वस्त्रद्वयोपरि अविच्छिन्ना सिन्दूररेखा प्रवर्तयन् वधूसमीपमागत्य- 'ॐ सुमङ्गलीति मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवताऽभिमन्त्रणे विनियोगः।' 'ॐ सुमङ्गलीरियं वधूरिमाꣳ समेत पश्यत।

सौभाग्यमस्यै दत्त्वा याथास्तं विपरेत नः ।।' इति मन्त्रेण पुनः पुनश्च तथैव त्रिवारं सीमन्तदेशे सिन्दूरं निःक्षिप्य (हालेर) ललाटमध्यं च सिन्दूरबिन्दुविभूषितं कृत्वाऽवशिष्टसिन्दूरसहितं पात्रं सकन्थं (थैलीसहित) तस्यै दद्यात् ।। तत्पश्चात् तूष्णीमेव मङ्गलसूत्रम् (पोते), ललन्तिकाम् (तिल हरी) च क्रमेण तस्याः गले परिधापयेत् ।।

अथ (अब ठाउँ सार्ने) वरः कन्यामुत्थाप्य वा कन्या स्वयम् उत्थाय 'ॐ इह गाव इति मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो लिङ्गोक्ता देवता उपवेशने विनियोगः।' 'ॐ इह गावो निषीदन्त्विहाश्वा ऽइह पूरुषाः । इहो सहस्रदक्षिणो यऽ इह पूषा निषीदतु'- इति मन्त्रं पठन् स्वस्य स्थाने उपवेश्यते, स्वयं च वधूस्थाने उपविश्यते। उपविष्टा वधूश्च वरस्य वस्त्रान्तमाकृष्य 'स्थीयताम्' इति वदन्ती तं स्वदक्षिणत उपवेशयेत् ,पादयोः प्रणमेच्च ।।

अथ वरः आचार्याय गोयुगं (गां वा) दद्यात् । गोयुगं (गां वा) ब्राह्मणं च संपूज्य कुशादीन्यादाय पूर्वसंकल्पसिद्धिरस्तु इत्युक्त्वा 'अमुक गोत्रः अमुक शर्माऽहम् कृतस्यैतावतो वैवाहिकस्य कर्मणः साङ्गता-सिद्धये रुद्रदेवताकम् इदं गोयुगं (इमां रुद्रदेवताकां गां वा) अमुक गोत्राय अमुक शर्म्मणे ब्राह्मणाय तुभ्यं संप्रददे' इति दद्यात् । ब्राह्मणश्च कोदादिति, स्वस्तीति च ब्रूयात् । यजमानस्तु कपिले० इति गां प्रार्थ्य, गोदानदानप्रतिष्ठाद्रव्यं दद्यादिति ।।

## अथ मधुपर्क (माहुर) प्राशनमाचारात्

दधिमधुघृतं पिहितं कांस्यपात्रे समानीतं वह्नौ तापितं पुरस्तात् कृत्वा पिधानमपसार्य वधूवरौ समालोडयेताम् (फेटून्)।। कनिष्ठिकया सम विभज्य अहं- पूर्विकामालम्ब्य मन्त्रपाठं विनैव परस्परं प्राशयेतां च । वरस्य विजये यथा- समयं पूर्वं कन्यासन्ततेरुत्पत्तिः, वध्वास्तु विजये पूर्वं पुत्रोत्पत्तिरिति

ग्राम- जरतीनां वचसि श्रद्धावती वार्ता ।। ततः हस्तौ प्रक्षाल्य आचामेताम् च ।।

अथाऽऽदित्यदुहिता शैलराजदुहिता च (पाशा खेल्ने)।। वधूवरौ परस्परं संमुखीभूय यथासुखं स्थित्वा सपण (ठिनी) विन्यासं दीव्येताम् अक्षैः। तयोरुपरि उभयपक्षीयं वस्त्रं प्रसार्य, तत्र लाजान् प्रक्षिप्य, चामराभ्याम् आलोडयेताम् डौलाउनू च कलशवाहिन्यौ केचन अन्ये वा स्त्रियौ यावत् न मन्त्रपाठः समाप्यते तावत् ।। आचार्यः- "ॐ तपस्तेजसा प्रभाविता जटाभाराजिनसंछन्नाऽऽ-दित्यदुहिता बहूनि वर्षाणि तताप । तेजसा तपन्ती च सा तपतीति विख्याता बभूव । अथैकदा सन्नद्धधन्वा सेनया सहितो वने विचरन् धृतातपत्रो नृपः संवरण उपसृत्याऽवोचत् प्रेक्षन्तीं सुभ्रुवं नीलकेशीं यौवनवतीं पीनस्तनीं पृथुश्रोणीं ताम् । हे ! त्वं कस्याऽसि किं नामा दुहितेति । सा होवाच, यस्यैकचक्रं भुजगनियमितं सप्ताश्वमचरणेन सारथिनाऽरुणेन प्रणुद्यमानं

स्यन्दनं, य एष भ्राजमानः प्रातरुद्यति, तस्याऽहं दुहिताऽऽशीर्ना-मेति । देवरूपी कुण्डलाभरणो महाबाहुः कस्त्वं भोः ! कया कामनया मामित्यादरेण पृच्छसीति ।। स होवाच तस्याऽअमृतोपमां वाचं निशम्य नृपवरः सुन्दरि ! नृपः संवरणोऽहं भार्या मे भव रूपिणीति श्रुत्वा सा होवाच य एवं मामजीजनत् तं गत्वा तेजोराशिमुद्यन्तं भास्करं वृणुष्व इति । स निशितैः कामशरैस्तुद्यमानः स्वपुरोहितं भगवन्तं वसिष्ठमुपातिष्ठत, मदर्थे तां ब्रध्नं वृणुष्व इति । स होवाच ब्रध्नस्तेन गत्वा ऋग्भिर्यजुर्भिः सामभिःस्तूयमानो वसिष्ठो यक्कामं कामयसे तत् ते दास्यामीति ।। स होवाच स एष कामो याज्यो मे नृपः संवरणस्तस्यार्थे दुहितरं ते वृणोमीति । दत्तेति स होवाच प्रतिगृहाणेति । अथ वसिष्ठस्तां वाचमनुश्रुत्य तुष्टः प्रतीचीं दिशमागतस्तत्सर्वं तस्मै निवेदयामास । अथ तेन निवेदिते सुदिने सुमुहूर्ते सुनक्षत्रे सुयोगे पुण्याहे पाणिं जग्राह संवरणः पाणिनाऽऽदौ

पित्रानुमङ्गलं प्रदत्तम् । उभावध्वर्युरन्वारेभे । कुशैर्लाजैः शमीपलाशैः समिद्भिः समन्त्रं हव्यवाहे हूयमाने देवतानामृषीणां गन्धर्वाणामप्सरसां सतां पश्यतां मङ्गलध्वनिभिर्ऋग्यजुः-सामाथर्वाङ्गिरसेतिहासपुराणमन्त्र-ध्वनिमिलितैः सनृत्यवादित्रगीतैर्विवाहः संवृत्तः। अथ हैतद्भानुर्धनं ददौ, गोऽश्वानां दासीनां महिषीणामजाविकानां कुञ्जराणां शतं साहस्त्रं वस्त्रमपरिमितं रजतं काञ्चनम् । तद्गृहीत्वा स्वपुरं रथेन वाजिभिर्युक्तेन गच्छन्तौ संमोदमानौ दम्पती जगाद तौ भानुः- भोः संवरण धरणीपते तपती नाम सेयं भार्या ते संवृत्ता, शृणुतं मद्वाक्यम् - ब्राह्मणवत्सलो भव, एषा ते दारक दारिका अविधवा अष्टपुत्रा जीववत्सा अनुत्तरवादिनी प्रेषकारिणी सत्यवादिनी ब्राह्मणस्तवा दैवतस्तवा मातरं संत्यज्य पितरं सन्त्यज्य भ्रातृन् सन्त्यज्य भर्तारमर्चितं सुपूजितं चाऽनुयाति त्वाम् । यथेन्द्रस्येन्द्राणी, यथा दशरथस्य कौसल्या, यथा रामस्य सीता, यथा

रावणस्य मन्दोदरी, यथा बलिनश्च तारा, यथा वायोश्चाञ्जनी, यथा नलस्य दमयन्ती, यथा सौदासस्य मदयन्ती, यथा पुरूरवस उर्वशी, यथा पुरुकुत्सस्य नर्मदा, यथा शन्तनोश्च गङ्गा, यथा धृतराष्ट्रस्य गान्धारी, यथा पाण्डोश्च कुन्ती, यथा पाण्डवानां द्रौपदी, यथा भीमसेनस्य हिडिम्बा, यथाऽर्जुनस्य सुभद्रा, यथा दुर्योधनस्य भानुमती, यथाऽऽदित्यस्य ममच्छाया, यथा चन्द्रस्य रोहिणी, यथा गणेशस्य सिद्धिबुद्धी, यथाऽगस्त्यस्य लोपामुद्रा, यथा योगेश्वरस्य मैत्रेयी, यथा वसिष्ठस्याऽरुन्धती, यथाऽत्रेरनसूया, यथा ब्रह्मणः सावित्री, यथा कृष्णस्य रुक्मिणी, यथा पशुपतेरुमा, यथा गौतमस्याऽहल्या, यथा हिमालयस्य मेनका, यथैवमन्येषामन्या, तथा तवेयमनुगामिनीति ।।१।। अथ शैलराजगृहे मेनका कन्यकां प्रजातां, कपर्दिने भवाय प्रत्तां च तां दुहितरं सा होवाच पत्यौ शृण्वति, अविधवा सुभगा कल्याणवती धनवती पुत्रवती यौवनवती यशोवती भवेति भवः।

होवाच श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण ।। इति ।। अथ भवः प्रत्युवाच सदा सुप्रीता सरदा भव, अथात इयं सर्वमङ्गला भूयात्, माहेन्द्रीव वारुणीवोत्तमानि लप्सीष्ट शोभनानि, नाहमेनां जह्याम् ।। त्रैलोक्ये सन्ति ये देवि ब्रह्मविष्ण्वादयः सुराः । एते त्वत्साक्षिणस्त्वं मेऽभवः प्रागङ्गना सती ।। त्यज्यते समयान्माता त्यज्यन्ते भ्रातरोऽपि वा । त्यज्यन्ते बान्धवाः सर्वे नाऽङ्गना सहगामिनी ।। न रोचयेऽश्वं न गजं हिरण्यं, कौशेयवासो विविधं च रत्नम् । शुद्धा कन्या करगा शैलभर्तस्तव प्रसादान्मम शंकरस्य।। लोके कीर्तिः कुले वृद्धिर्लक्ष्मीश्च गृहमागता । स्त्रीरत्नं च मया प्राप्तं त्वत्प्रसादाद्धिमालय ।। यद्यत्कल्याणकृल्लोके या च भक्तिरधोक्षजे । आवयोर्दत्तचित्तानां सर्वं भवतु तत्सदा ।। इति ।। अत्राऽवसरे वधू-

वरयोरुपरि लाजान् आलोडयन्त्यौ द्वे नार्यौ तत् वस्त्रं परस्परे बलादाकर्षयतः विजेत्री गृह्णाति च।। इत्यादित्यदुहिता, शैलराजदुहिता च ।।

## अथ ग्रहतिलकम् (टीका)

वधूवरयोरभिमूखीभूतः कश्चन ब्राह्मणः सदधिसिन्दूराक्तैरक्षतैः पूर्वं वरस्य तैरेव पश्चाद्वध्वा ललाटे प्रतिमन्त्रान्तं तिलकं कुर्यात् ।। तत्र मन्त्राः- (पटकैपिच्छे टीका लिएर पहिले आधा वरलाई र बचेको आधा वधूलाई लाइदिनू।)

''ॐ गजाननः पाशसनाथपाणी, रक्ताम्बरो ह्युन्दुरुवाहनश्च ।
लड्डूकहस्तो हि गणाधिनाथो, वरस्य वध्वा वितनोतु भूतिम् ।।१।।
हंसाधिरूढः सचतुर्मुखः सः, कमण्डलुर्यज्ञपवित्रदेहः ।
इन्द्रादिदेवैरभिपूजितश्च, वरस्य वध्वा वितनोतु भूतिम् ।।२।।
शङ्खं गदां चक्रसरोरुहे च, करैर्दधानो गरुड़ाधिरूढः ।

जगत्पतिर्दिक्पतिपूजितश्च, वरस्य वध्वा वितनोतु भूतिम् ।।३।।
गङ्गाधरो भस्मजटाधरश्च, ललाटचन्द्रो वृषवाहनश्च ।
त्रिशूलखट्वाङ्गधरो महेशो, वरस्य वध्वा वितनोतु भूतिम् ।।४।।
त्रिवेदमूर्तिर्जगदेकचक्षुर्, विरञ्चिनारायणशङ्करात्मा ।
प्रभाकरश्चाऽखिललोकहेतु-र्वरस्य वध्वा वितनोतु भूतिम् ।।५।।
कलानिधिः कैरववर्गबन्धुः, कम्बुद्युतिः पुण्यविवृद्धिहेतुः ।
महौषधीशो रजनीपतिश्च, वरस्य वध्वा वितनोतु भूतिम् ।।६।।
महीतनूजो महिमाऽतिधीरः, सदा बलीयान् सततं पुराणः ।
हिरण्यवर्णः कनकाऽभिधानो, वरस्य वध्वा वितनोतु भूतिम् ।।७।।
शशाङ्कसूनुर्गुणपूर्णनामा, सुखादिहेतुर्व्यसनापहारी ।
बुधश्च विज्ञानविचक्षणोऽसौ, वरस्य वध्वा वितनोतु भूतिम् ।।८।।
समस्तविज्ञानगुरुर्मनीषः, सुरेन्द्रपूज्यः सुजनैकगम्यः ।

बृहस्पतिर्मङ्गलनामधेयो, वरस्य वध्वा वितनोतु भूतिम् ।।९।।
तेजोऽधिकश्चाऽखिलखेचराणां, शुक्रः सुदीप्तः सुरशत्रुपूज्यः ।
यशोधनोऽसौ मृतजीवकश्च, वरस्य वध्वा वितनोतु भूतिम् ।।१०।।
समस्तखेटोपरिमार्गगामी, शनैश्चरः सन्ततमादरेण ।
अस्मिन् सुलग्ने समुपागतः सन्, वरस्य वध्वा वितनोतु भूतिम् ।।११।।
यो धावतेऽद्यापि सुधाशनः सन्, तमोमयश्चन्द्रमसं च सूर्यम् ।
स्वयं बली लब्धवरः स राहुर्- वरस्य वध्वा वितनोतु भूतिम् ।।१२।।
समस्तसंपत्समवाप्तिहेतुः, केतुः प्रपन्नार्तिहरोऽत्र लग्ने ।
भूत्वाऽर्धमूर्तिः क्षितिसौख्यकर्ता, वरस्य वध्वा वितनोतु भूतिम् ।।१३।।
सुधूम्रवर्णश्चलसप्तजिह्वः, शाण्डिल्यपुत्रः स धनञ्जयश्च ।
शृङ्ग्रयाख्यगोत्रो ह्यरणीप्रसूश्च, वरस्य वध्वा वितनोतु भूतिम् ।।१४।।
सिंहाधिरूढा वरचापखड्गा, शूलारिखेटेष्वहियुक्तबाहुः ।

त्रैलोक्यमाता सुचिराय दुर्गा, वरय वध्वा वितनोतु भूतिम् ।।१५।।
सुराश्च सर्वे ग्रहदेवताश्च, सप्तर्षयो दिक्पतयो नगाश्च।
सयोगवारास्तिथयोऽखिलाश्च, वरस्य वध्वाश्च शुभानि कुर्युः ।।१६।।
ये यन्निदेशादिह कर्तुमीशा, ये यन्निदेशादपि हर्तुमीशाः ।
ते तन्निदेशादनयोः शुभानि, प्रत्यर्प्य गच्छन्तु यथावकाशम् ।।१७।।

*।। इति ग्रहतिलकम् ।।*



ततोऽग्निस्थापनोक्तं शेषं होमं समाप्य ब्रह्मणाऽन्वारब्धो होता- 'ॐ अग्नये स्विष्टकृत इति मन्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता स्विष्टकृद्धोमे विनियोगः।' 'ॐ अग्नये स्विष्टकृते स्वाहा, इदमग्नये स्विष्टकृते न मम' ।। ततो वरः संस्त्रवं प्राश्य आचामेत् । अत्रैव दधिगुडप्राशनमाचमनं चाऽऽचारात् ।।

ततः पूर्णपात्रदानम् ।। षट्पञ्चाशदुत्तरशतद्वयम् (२५६) मुष्टिपरिमितं

(बहुभोक्त्रेकपुरुषभोजनपर्याप्तं वा) सफलं सब्रह्मसूत्रं सद्रव्यमन्नमुपनीय वरः कुशादीन्यादाय- 'ॐ अद्यकृतस्य विवाहहोमादिसकलकर्मणः अपूर्णस्य सतः पूर्णार्थमिदं ब्रह्मसूत्रद्रव्यफलसहितं पूर्णपात्रं प्रजापतिदैवतं अमुक गोत्राय अमुक शर्म्मणे ब्रह्मस्वरूपाय ब्राह्मणाय तुभ्यमहं संप्रददे, ॐ तत्सन्न मम' । इत्युच्चार्य दद्यात् ।। स्वस्तीति ब्राह्मणः ब्रूयात् ।।

ततः प्रणीताविमोकः- 'ॐ सुमित्रिया न इति द्वयोर्यजुषोः प्रजापतिर्ऋषिरापो देवताः प्रणीताविमोके विनियोगः।' 'ॐ सुमित्रिया न ऽआप ऽओषधयः सन्तु' इति सपवित्रेण प्रणीताप्रोक्षण्योर्जलेन वधूवरौ अभिषिञ्च्य 'ॐ दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः'।। इति ऐशान्यां प्रणीतापात्रं न्युब्जीकुर्यात् ।। तत आस्तरणक्रमेण बर्हिरुत्थाप्य- 'ॐ देवा गातु विदो गातुं वित्त्वा गातुमित । मनसस्पत इमं देवं यज्ञ ँस्वाहा वाते धाः' ।। इति जुहुयात् ।।

*।। इति प्रणीताविमोकः ।।*



## अथ पूर्णाहुतिः

सपत्नीकेन वरेण पादयोरन्वारब्धो होता उत्थाय ब्रह्मणा सहितः स्रुवे फलादिकं निधाय अविच्छिन्नया घृतधारया- 'ॐ मूर्धानं दिवोऽअरतिं पृथिव्या वैश्वानरमृतऽआजातमग्निम् । कवि सम्राजमतिथिञ्जनानामासन्नापात्रं जनयन्त देवाः स्वाहा'।। इति जुहुयात् ।।१।। ततः एधोस्येति वधूवरकर्तृको घृताभिघारितचरुसहितवस्त्रहोमः- 'ॐ एधोस्येधिषीमहि समिदसि तेजोसि तेजो मयि धेहि । समाववर्ति पृथिवी समुषाः समुसूर्यः समु विश्वमिदं जगत् । व्वैश्वानरज्योतिर्भूयासं विभून् कामान् व्यश्नवै भूः स्वाहा ।।२।। ॐ अभ्यादधामि समिधमग्ने व्रतपते त्वयि, व्रतं च श्रद्धां चोपैमीन्धे त्वा दीक्षितोऽअहम् । यत्र ब्रह्म च क्षत्रञ्च सम्यञ्चौ चरतः सह, तँल्लोकं पुण्यं प्रज्ञेयं यत्र देवाः सहाग्निना ।।३।। यत्रेन्द्रश्च वायुश्च सम्यञ्चौ चरतः सह । तँल्लोकं पुण्यं प्रज्ञेयं यत्र सेदिर्नविद्यते स्वाहा ।।४।। इति ।।

ततः स्रुवेण दग्धं चरुमानीय दक्षिणकराऽनामिकया- 'ॐ त्र्यायुषं जमदग्नेः' इति ललाटे' 'ॐ कश्यपस्य त्र्यायुषम्' इति ग्रीवायाम्, 'ॐ यद्देवेषु त्र्यायुषम्' इति दक्षिणबाहुमूले, 'ॐ तन्नोऽअस्तु त्र्यायुषम्' इति हृदि वरस्य वध्वाश्च त्र्यायुषं कुर्यात् ।।

ततः कुङ्कुमादिरक्तं रक्तपुष्पादियुक्तं सदीपं सवस्त्रं सदक्षिणं क्षेत्रपालबलिं वधूवरौ नीराज्य ब्राह्मणेन शूद्रेण वा चतुष्पथे क्षेपयेत् । तत्र वाक्यम् - 'ॐ क्षेत्रपालाय भूतप्रेतपिशाचराक्षसशाकिनी-डाकिनीवेतालादिपरिवार-युताय इमं बलिं समर्पयामि, भो भो क्षेत्रपाल इमं बलिं गृहाण मम यजमानस्य सपत्नीकस्य आयुष्कर्ता क्षेमकर्ता पुष्टिदस्तुष्टिदो भव।।' इति।।

## अथ घृतच्छाया

कांस्यपात्रं सघृतसुवर्णमुपनीय दूर्वाभिर्वरोऽभिमन्त्रयेत्- 'ॐतेजोसि शुक्रमस्यमृतमसि धामना मासि प्रियं देवानामनाधृष्टं देवयजनमसि, तेजोऽसि

शुक्रममृतमायुष्याऽआयुर्मे पाहि, देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहु-भ्यां पूष्णो हस्ताभ्यामाददे' ।। ततो दूर्वाभिः संमार्जयेत्- 'ॐ काण्डात् काण्डात् प्ररोहन्ती परुषः परुषस्परि । एवा नो दूर्वे प्रतनु सहस्रेण शतेन च' ।। इति ।।

ततश्छायां पश्येत्- 'ॐ अलक्ष्मीर्यच्च दौस्थ्यं मे सर्वगात्रेष्ववस्थितम् । तत् सर्वं शमयाऽऽज्य त्वं लक्ष्मीं पुष्टिं च वर्धय ।। आज्यं तेजः समुद्दिष्टमाज्यं पापहरं शुभम् । आज्यं सुराणामाहार आज्ये लोकाः प्रतिष्ठिताः ।। भौमान्तरिक्षं दिव्यं वा यन्मे किल्विषमागतम् । सर्वं तदाज्यसंस्पर्शात् प्रणाशमुपगच्छतु' ।। इति ।।

ततः कुशादीन्यादाय - 'ॐ अद्य अमुक गोत्रस्य सदारस्य अमुक शर्म्मणो मम दुःस्वप्नदुर्निमित्तविघ्नौघशमनार्थं तेजःप्रज्ञाशौर्ययशोबलाऽऽ-युर्लक्ष्मीपुष्टिवृद्ध्यर्थमिदमवलोकितमुखमण्डलच्छायं ससुवर्णं कांस्य-

पात्रस्थितमाज्यं मृत्युञ्जयदैवतम् अमुक गोत्राय अमुक शर्मणे तुभ्यमहं संप्रददे' ।। इति दद्यात् ।।

ततः प्रार्थयेत् - 'ॐकामधेनोः समुद्भूतं देवानामुत्तमं हविः। आयुर्वृद्धिकरं दातुराज्यं पातु सदैव माम्' ।। इति ।। ततो दानप्रतिष्ठाद्रव्यं सकुशोदकमादाय- 'ॐअद्यकृतैतत् ससुवर्णकांस्यपात्रस्थिताऽवलोकितमुखच्छायाऽऽज्यदानकर्मणः साङ्गतार्थं इदम् अमुकद्रव्यम् अमुक दैवतं दानप्रतिष्ठात्वेन तुभ्यमहं संप्रददे।।' इति दद्यात् ।।

अथ गोदानम् ।। ततो वरः सपत्नीकः आचार्याय वरत्वेन गां तन्निष्क्रयद्रव्यं वा सङ्कल्प्य दद्यात् । गां निष्क्रयद्रव्यं वा उपनीय- 'ॐ नमो गोभ्य० इति गां, नमो ब्रह्मण्यदेवाय० इति ब्राह्मणं च संपूज्य कुशादीन्यादाय पूर्वसंकल्पसिद्धिरस्तु इत्युक्त्वा - 'अमुक गोत्रः अमुक शर्मा सपत्नीकोऽहं कृतस्य वैवाहिक-होमादिकर्मणः साद्गुण्यद्वारा यथोक्तफलाऽवाप्तये इमां

गां रुद्रदैवतां (इदं रुद्रदैवतं गोनिष्क्रयीभूतं रजतद्रव्यं चन्द्रदैवतं, ताम्रद्रव्यं सूर्यदैवतं वा) अमुक गोत्राय अमुक शर्म्मणे आचार्याय तुभ्यमहं संप्रददे, ॐ तत्सन्न मम' ।। इति दद्यात् ।। 'स्वस्ति, कोदात् इति आचार्यः ।। ततः वरः कपिले० इत्यादिना गां प्रार्थ्य दानप्रतिष्ठाद्रव्यं सकुशोदकं समादाय- 'ॐ अद्य कृतैतद्गोदानगोनिष्क्रयीभूतद्रव्यदान-साङ्गतासिद्धये इदं द्रव्यम्० इत्यादि वाक्यं समुच्चार्य दद्यात् ।।

ततो भूयसीं दक्षिणामुपनीय- 'ॐ देयद्रव्याय नमः' इति संपूज्य कुशादीन्यादाय- पूर्वसंकल्पसिद्धिरस्तु इत्युच्चार्य - 'ॐ अद्यकृतैतद्वैवाहिकपूजनहवनादिसकलकर्मणः साङ्गतासिद्ध्यर्थमिमां भूयसीं दक्षिणां नानानामगोत्रेभ्यो नानानामशर्मभ्यो ब्राह्मणेभ्यो यथाभागं विभज्य दातुमहमुत्सृजे' ।। इति भूमौ निधाय यथार्हं विभज्य दद्यात् ।। कन्यापिताऽपि कन्याविवाहसाङ्गतायै पूर्णपात्रं, गां, भूयसीं च दद्यात् ।।

तत आचार्य आवाहितान् देवान् संपूज्य -'यान्तु देवगणाः सर्वे पूजामादाय पार्थिवीम् । इष्टकामप्रसिद्ध्यर्थं पुनरागमनाय च' ।। इति विसर्जयेत् ।।

ततश्च आचार्यादयो ब्राह्मणाः संभूय सपत्नीकं वरम् कलशजलेन -'ॐ सर्वे समुद्राः सरित० इत्यादिकैः पौराणैः, 'देवस्य त्वा सवितुरित्यादिभिः, द्यौःशान्तिरित्यादिभिर्वा वैदिकैर्मन्त्रैरभिषिच्य पुष्पादिकं रक्षाप्रतिसरं च गृहीत्वा - 'ॐ आब्रह्मन्० इत्यादिकान् मन्त्रान् पठित्वा प्रसादं साशीर्वचन-मुभाभ्यां दद्यात् ।। इति विवाह-पद्धतिः ।।



## छोरी अन्भाउँदा र बुहारी ढुकाउँदा गर्ने विधि

अथ यथाचारं कृतभोजनौ विश्रान्तौ यथासमयं धृतवस्त्राभरणौ वधूवरौ सज्जीकृतविसर्जनोपचारं सन्निहितश्वश्रूश्वशुरादिपरिवारं वैवाहिकं देवाऽऽगारं

प्रविश्य आसने देवाभिमुखौ उपविश्य पाणी प्रक्षाल्य, पुष्पाञ्जलिमादाय, 'नमोस्त्वनन्ताय सहस्रमूर्तये, सहस्रपादाक्षिशिरोरुबाहवे । सहस्रनाम्ने पुरुषाय शाश्वते, सहस्रकोटीयुगधारिणे नमः ।।' 'दीपनारायणाय नमः' इति दीपाय, ततः 'वक्रतुण्ड महाकाय कोटिसूर्य समप्रभ । अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ।। विघ्नेश्वराय वरदाय सुरप्रियाय, लम्बोदराय सकलाय जगद्धिताय । नागाननाय श्रुतियज्ञविभूषिताय, गौरीसुताय गणपाय नमो नमस्ते ।। श्रीमन्मङ्गलमूर्तये गणाधिपतये नमः।।' इति गणेशाय पुष्पाञ्जलिं समर्प्य, ततः 'नमो नमस्ते स्फटिकप्रभाय, सुश्वेतहाराय सुमङ्ग-लाय । सपाशहस्ताय झषासनाय, जलाधिनाथाय नमो नमस्ते ।।' 'वरुणाय नमः' इति वरुणाय, ततः 'ब्रह्माणी कमलेन्दुसौम्यवदना माहेश्वरी लोकपा, कौमारी रिपुदर्पनाशनकरी चक्रायुधा वैष्णवी । वाराही घनघोरघर्घरमुखी ऐन्द्री च वज्रायुधा, चामुण्डा गणनाथरुद्रसहिता रक्षन्तु

नो मातरः ।।' 'मातृकाभ्यो नमः' इति मातृकाभ्यः समर्पयेताम् ।।

ततः श्वश्रूर्जामातरं कन्यां च गन्धाक्षतैर्माल्यैश्चाऽलंकृत्य दधिकदलीफलादिकं शकुनं प्राशयेत् ।। पूगीफलयज्ञसूत्रद्रव्यसहितेन वस्त्रेण धर्मग्रन्थिं च बध्नन्ती कन्यासंरक्षणं च सविनयं प्रार्थयेत् ।। ततो वरः श्वश्रूप्रभृतीः समाश्वास्य प्रणम्य च, उभयपक्षीये कलशभारादिके पुरतः प्रस्थिते, पितृभ्रात्रादिभिः पृष्ठेन उह्यमानां वधूमग्रतः कृत्वा स्वयं च केनचिदुह्यमानः देवाऽऽगारात् गणेशादिकान् देवान् स्मरन् निष्क्रामेत् । कन्यापित्रादयश्च त्रिवारं भ्रामयित्वा कन्यां वरं च यथाक्रमं शिबिकादौ सहैव पृथ ग् वा निवेशयेयुः ।।

ततः संबन्धि (संधि) द्वयसंमेलनम् तौ ततः स्वपक्षीयान्, कृतवादनान् वादकजनान् कलशादिकाँश्च पुरस्कृत्य वधूमनु वरस्य प्रस्थानं गृहं प्रति ।। वरपक्षे - मध्येमार्गम् वादकानां शिबिका-वाहकानां चोपरो-धस्तत्सन्तोषणञ्च ।।

ततो भवनाऽङ्गणं प्राप्तयोर्वरवध्वोर्भगिनीद्वयकर्तृक-नीराजनं (अर्ति सियाँली) तत्कर्तृको द्वारोपरोधस्तत्सन्तोषणं च । व्रीहिपुञ्जेषु तण्डुलपिष्टपात्रेषु तिलतैलेन प्रज्वालितानां षण्णां दीपानां चरणचङ्क्रमेण निर्वापणं कुर्वाणाया: वध्वा वैवाहिकदेवाऽऽगारप्रवेशः ।। सपत्नीकस्य वरस्य पूर्वावाहितपूजितदेवानां पूर्वरीत्या पुष्पाञ्जलिः ।। ततः श्वश्रूस्नुषयोः (सासूबुहारीको) कबरीद्वयसंयोजनं सह वसोः पवित्रमसि० इति वैदिकमन्त्रपाठ- सहितेन घृत (वसु) धारानिपातनेन ।। ततो वध्वाः श्वश्रूचरणयोर्वन्दनं सद्रव्यनिक्षेपम् । श्वश्रूकर्तृको वधूमुखावलोकश्च सति संभवे द्विगुणीकृतद्रव्यप्रत्यर्पणपूर्वकः ।। तत इतरासां तथैव वन्दनं तथैव च मुखावलोकः (समयान्तरेऽप्येतत्कर्म क्रियते) ।।

ततो वरमात्रा धर्मग्रन्थिमोचनम्, तदीयद्रव्यं निधाय स्नुषया सह धान्यैर्घटीस्थापन-पात्राधारीकृतैः अन्यैर्वा कैश्चन प्रस्थ (पाथी) संभरणम्,

तद्धान्यमादाय पुरस्थितया वध्वा पश्चात्स्थितया श्वश्र्वा च धान्यकोशे (भकारी नाम्नीपात्रे) स्थापनं च । परेऽहनि वध्वा सह वरस्य श्वशुरालये गमनं, तत्रैव च रात्रौ निवासः। प्रत्यागत्य परतरेऽहनि विवाहे शिलापूजाऽनुसारं शिलापुत्रस्य पूजनं, तस्य शय्यायां स्थापनं, मङ्गलपत्राऽन्वेषणं जले चेत्यादिकः सर्वोऽप्ययं पूर्वजैः प्रवर्तितो लौकिको विविधविधिकलापः कर्तव्यः ।। 'त्रिरात्र-मक्षारलवणाशिनौ स्याताम्, अधःशयीयाताम्, बाला चेत् संवत्सरं न मिथुनमुपेयाताम्, द्वादशरात्रम् षड्रात्रं त्रिरात्रमन्ततः, ग्रामवचनञ्च नकुर्युः, विवाहश्मशानयोर्ग्राम-प्रविशतात्, तस्मात् तयोर्ग्रामः प्रमाणम् । इत्यादीनि श्रुतिसूत्रकृद्वचनानि- 'येनाऽस्य पितरो याता येन याताः पितामहाः । तेन यायात् सतां मार्गं तेन गच्छन्न रिष्यते ।। इत्यादीनि स्मृतिवचनानि च नोपेक्षणीयानि कल्याण-कामैर्मतिमद्भिः ।। इति शुभम् ।।



# अथ चतुर्थीकर्मपद्धतिः

विवाहदिनाच्चतुर्थे दिने यथाऽऽचारं विवाहदिन एव वा सद्यः पक्षे विवाहमण्डपं तन्निष्क्रयप्रदानेन आचार्यतः स्वीकृत्य केचिदेतत् कर्म कुर्वन्ति ।

अथ चतुर्थीकर्म क्रियते ।। तत्र प्रयोगः ।। वधूवरौ अपररात्रे उद्वर्तनपूर्वकं यथाऽऽचारं युग (जुवा) काष्ठोपरि स्नापयित्वा वस्त्राऽऽभरणैः अलङ्कृत्य कर्मस्थाने प्राङ्मुखौ उपवेशयेत् ।। आचार्यः हस्तमात्रचतुरस्त्रां भूमिं कुशैः परिसमुह्य, तान् कुशान् ऐशान्यां निक्षिप्य, गोमयोदकेनोपलिप्य स्रुवमूलेन प्रागग्राः दक्षिणोपक्रमा उदगपवर्गास्तिस्रो रेखाः कृत्वा, उल्लेखनक्रमेण अनामिकाऽङ्गुष्ठाभ्यां त्रिरुद्धृत्य, वारिणा तं देशमभ्युक्ष्य, कांस्यपात्रेण वैवाहिकम् शिखिनामानम् अग्निमानीय प्रत्यङ्मुखं स्थापयेत् ।।

ततो वर आचम्य वरणसामग्रीं गन्धाक्षतपुष्पवस्त्रादिकां सकुशोदकां समादाय पूर्वसंकल्पमुच्चार्य 'अमुक गोत्रः अमुक शर्माऽहम् अद्यकर्तव्यचतुर्थी-होमकर्मणि कृताऽकृताऽवेक्षणादिकर्म कर्तुं नानानामगोत्रान्नानानामशर्मणो ब्राह्मणान् ब्रह्माऽऽचार्यत्वाऽऽदिना युष्मान् वृणे '।। इति वृत्वा, तान् गन्धाऽऽदिभिरभ्यर्च्य 'वृताःस्थ' इति ब्रूयात् ।। तैश्च 'वृताःस्मः' इत्युक्ते 'यथाविहितं कर्म कुरुत' इति ब्रूयात् ।। ते च 'करवामः' इति ब्रूयुः। अथ ब्रह्माणं वेद्या दक्षिणतः दर्भाऽऽसने उदङ्मुखं स्थापयेत् ।। ततः-आचार्यः कुशकण्डिकाम् अग्निस्थापनोक्तां विधाय आघारमम-पर्यन्तं कृत्यं निवर्तयेत् ।। ततः पूर्वोपकल्पितास्तिस्रः समिधोऽग्नौ तूष्णीं समुत्थाय प्रक्षिप्य सपवित्रेण प्रोक्षण्युदकेन अग्निं पर्युक्ष्य उपयमनकुशान् वामहस्ते कृत्वा पातितदक्षिणजानुः ब्रह्मणा कुशेनाऽन्वारब्धः समिद्धतमेऽ-ग्नौ स्रुवेण आघाराद्याश्चतस्र आहुतीर्जुहुयात् ।। तत्तदाहुत्यन्ते स्रुवाव-

स्थितहुतशेषं प्रोक्षणीपात्रे संस्रावयेच्च ।। तत्र मन्त्राः- 'ॐ प्रजापतय इति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः प्रजापतिर्देवता चतुर्थीकर्मणि आज्य-होमे विनियोगः।' 'ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम'। इति मनसा ।।१।। 'ॐ इन्द्रायेति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः इन्द्रो देवता चतुर्थीकर्मणि आज्यहोमे विनियोगः।' 'ॐ इन्द्राय स्वाहा इदमिन्द्राय न मम ।' एतावाघारौ ।।२।। 'ॐ अग्नय इति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः अग्निर्देवता चतुर्थीकर्मणि आज्यहोमे विनियोगः।' 'ॐ अग्नये स्वाहा इदमग्नये न मम' ।।१।। 'ॐ सोमायेति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः सोमो देवता चतुर्थीकर्मणि आज्यहोमे विनियोगः।' 'ॐ सोमाय स्वाहा इदं सोमाय न मम'।। एतावाज्यभागौ ।।२।। ततः अग्नेरुत्तरतः प्रोक्षणी-पात्रसमीपे जलपूर्णं पृथूदकं (फराकिलो) *नाम पात्रं स्थापयेत् । दास्यमानाऽऽहुति*-पञ्चके तत्तदाहुत्यन्ते तत्रैव हुतशेषस्य प्रक्षेपं च कुर्यात् ।। ततः अनारब्ध

एव - 'ॐ अग्ने प्रायश्चित्त इत्यादीनां पञ्चानां परमेष्ठी ऋषिः अग्निवायु-सूर्यचन्द्रगन्धर्वा देवताः अनुष्टुप्छन्दश्चतुर्थीकर्मणि आज्यहोमे विनियोगः।' 'ॐ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि, यास्यै पतिघ्नी तनूस्तामस्यै नाशय स्वाहा । इदमग्नये न मम'।। इति हुत्वा पृथूदकपात्रे संस्रवं प्रक्षिपेत् ।। एवमग्रेऽपि ।।१।। 'ॐ वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम ऽउपधावामि यास्यै प्रजाघ्नी तनूस्तामस्यै नाशय स्वाहा । इदं वायवे न मम' ।।२।। 'ॐ सूर्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै पशुघ्नी तनूस्तामस्यै नाशय स्वाहा । इदं सूर्याय न मम' ।।३।। 'ॐ चन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै प्रजाघ्नी तनूस्तामस्यै नाशय स्वाहा । इदं चन्द्राय न मम' ।।४।। 'ॐ गन्धर्व प्रायश्चित्ते त्वं देवानां

प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै यशोघ्नी तनूस्तामस्यै नाशय स्वाहा । इदं गन्धर्वाय न मम' ।।५।। ततः प्रजापतिं मनसा ध्यायन् आज्याभिघारितेन स्थालीपाकेन स्रुवस्थापितेन -'ॐ प्रजापतये स्वाहा - इदं प्रजापतये न मम' इति हुत्वा हुतशेषं प्रोक्षणीपात्रे प्रक्षिपेत् ।। ततो ब्रह्मणाऽन्वारब्ध आज्यसहितं स्थालीपाकं स्रुवेणाऽऽदाय- 'ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते न मम' इति ।। प्रोक्षणीपात्रे प्रक्षिपेत् ।। एवमग्रेऽपि ।। ततः केवलेन आज्येन वक्ष्यमाणा नवाहुती- र्जुहुयात्- 'ॐ व्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुभश्छन्दांसि अग्निवायुसूर्या देवताः चतुर्थीकर्मणि प्रायश्चित्तहोमे विनियोगः।' 'ॐ भूःस्वाहा इदमग्नये न मम' ।।१।। 'ॐ भुवः स्वाहा इदं वायवे न मम' ।।२।। 'ॐ स्वःस्वाहा इदं सूर्याय न मम' ।।३।। 'ॐ त्वन्नोऽ अग्ने इति वामदेव ऋषिरग्नीवरुणौ देवते त्रिष्टुप्छन्दश्चतुर्थीकर्मणि

प्रायश्चित्तहोमे विनियोगः।' 'ॐ त्वन्नोऽ अग्ने व्वरुणस्य व्विद्वान् देवस्य हेडो अवयासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो व्विश्वाद्वेषाᳬंᳬ सि प्रमुमुग्ध्यस्मत् स्वाहा ।। इदमग्नीवरुणाभ्यां न मम' ।।४।। 'ॐ सत्वन्न इति व्वामदेव ऋषिरग्नीवरुणौ देवते त्रिष्टुप्छन्दश्चतुर्थीकर्मणि प्रायश्चित्तहोमे विनियोगः।' 'ॐ सत्वन्नोऽअग्ने वमोभवोती नेदिष्ठोऽअस्याऽउषसो व्युष्टौ। अवयक्ष्वणो व्वरुणꣳ रराणो व्वीहि मृडीकꣳ सुहवो नऽएधि स्वाहा ।' 'ॐ इदमग्नीवरुणाभ्यां न मम' ।।५।। 'ॐ अयाश्चाग्न इति वामदेव ऋषिरग्निर्देवता त्रिष्टुपछन्दश्चतुर्थीकर्मणि प्रायश्चित्तहोमे विनियोगः।' 'ॐ अयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्वमित्वमयाऽ असि । अयानो यज्ञं वहास्ययानो धेहि भेषजᳬंᳬ स्वाहा । 'ॐ इदमग्नये न मम' ।।६।। 'ॐ ये ते शतमिति वामदेव ऋषिस्त्रिष्टुप्छन्दो वरुणः सविता विष्णुर्विश्वे देवाः मरुतः स्वर्काश्च देवताश्चतुर्थीकर्मणि सर्वप्रायश्चित्तहोमे विनियोगः।'

'ॐ ये ते शतं व्वरुणं ये सहस्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्नोऽअद्य सवितो तद्विष्णुर्व्विश्वे मुञ्चन्तु मरुतः स्वर्क्काः स्वाहा । ॐ इदं व्वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्क्केभ्यः।।७।। 'ॐ उदुत्तममिति शुनःशेप ऋषिस्त्रिष्टुप्छन्दो व्वरुणो देवता चतुर्थीकर्मणि सर्वप्रायश्चित्तहोमे विनियोगः।' 'ॐ उदुत्तमं व्वरुणपाशमस्मदवाधमं व्विमध्यमꣳ श्रथाय । अथाव्वयमादित्यव्रते तवानागसो अदितये स्याम स्वाहा । ॐ इदं व्वरुणाय न मम' ।।८।। 'ॐ प्रजापतय इति प्रजापतिर्ऋषिः प्रजापतिर्देवता त्रिष्टुप्छन्दश्चतुर्थीकर्मणि सर्वप्रायश्चित्तहोमे विनियोगः ।' 'ॐ प्रजापतये स्वाहा, इदं प्रजापतये न मम'। इति मनसा ।।९।।

ततः संस्रवप्राशनम्, आचमनं च वधूवरयोः।।

अथ पूर्णपात्रदानम् ।। सकुशोदकं पूर्णपात्रमादाय - 'ॐ अद्यकृतै-

तच्चतर्थीहोमकर्मणः अपूर्णस्य पूरणार्थमिदं सद्रव्यफलब्रह्मसूत्रं पूर्णपात्रं प्रजापतिदैवतं अमुक गोत्राय अमुक शर्मणे ब्रह्मरूपाय तुभ्यमहं संप्रददे'।

इति दद्यात् ।।' स्वस्तीत्युच्चार्य ब्राह्मणः प्रतिगृहणीयात् ।।

ततः प्रणीताविमोकः - 'ॐ सुमित्रिया०, दुर्मित्रिया० इति द्वयोर्यजुषोः प्रजापतिर्ऋषिरापो देवताः, प्रणीताविमोके विनियोगः ।' 'ॐ सुमित्रियानऽआपऽओषधायः सन्तु' इति सपवित्रेण प्रणीताप्रोक्षण्योर्जलेन वधूवरौ अभिषिच्य ।। 'ॐ दुर्मित्रियास्तस्मै सन्तु योस्मान् द्वेष्टि यं च वयं द्विष्मः ।। इति ऐशान्यां प्रणीतापात्रं न्युब्जीकुर्यात् ।।

तत आस्तरणक्रमेण बर्हींषि समानीय घृतेनाऽभिघार्य हस्तेन जुहुयात् ।। तत्र मन्त्रः- 'ॐ देवा गातु विदो गातुमिति मन्त्रस्य वनस्पतिर्ऋषिर्विराट्छन्दो वातो देवता बर्हिर्होमे विनियोगः।' 'ॐ देवा गातु विदो गातुं वित्त्वा गातु मित । मनसस्पतऽइमन्देवयज्ञꣳ स्वाहा वाते धाः।। इति ।।

ततः पृथूदुकपात्रस्थजलेन साम्रपल्लवेन समन्त्रपाठं वधूमभिषिञ्चेद्वरः। तत्र मन्त्रः - 'ॐ या त इत्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः वधूर्देवताऽभिषेचने विनियोगः।' 'ॐ या ते पतिघ्नी प्रजाघ्नी पशुघ्नी यशोघ्नी गृहघ्नी निन्दिता तनूः। जारघ्नीं तत एनां करोमि । सा जीर्य त्वं मया सह अमुक नाम्नीदेवि ।। (वध्वाः पूर्वघृतं नाम, अस्मिन्नेव समये कल्पितं वा नाम वरो गृह्णीयात् ।।)

ततो जुष्टप्राशनम् (जूठो ख्वाउने) ।। वरः 'ॐ प्राणैस्त इति मन्त्रस्य प्रजापतिर्ऋषि-र्यजुर्वधूर्देवता चरुशेषभोजने विनियोगः ।' 'ॐ प्राणैस्ते प्राणान् संदधामि' (१)। 'ॐ अस्थिभिस्ते अस्थीनि संदधामि' (२)। 'ॐ मांसैस्ते मांसानि संदधामि' (३)। 'ॐ त्वचा ते त्वचं संदधामि' (४)। इति मनसा मन्त्रं जपन् चतुर्वारं स्वभुक्तशेषं स्थालीपाकं वधूं प्राशयेत्, आचामेत्, आचमयेच्च ।।

ततो वरः वधूदक्षिणस्कन्धतो नीतेन स्वदक्षिणपाणितलेन वध्वाः

हृदयं स्पृशेत् । तत्र मन्त्रः- 'ॐ यत्ते इति मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो वधूर्देवता हृदयाऽऽलम्भने विनियोगः।' 'ॐ यत्ते सुसीमे हृदयं दिवि चन्द्रमसि श्रितम् । वेदाऽहं तन्मां तद्विद्यात् पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतम्' ।। इति ।। अस्मिन्नवसरे यथाऽऽचारं कङ्कणमोचनम्, अञ्चलग्रन्थिमोचनम्, द्यूतग्रन्थिमोचनम् च भवति ।।

अथ पूर्णाहुतिः ।। उत्थाय होता ब्राह्मणाऽन्वारब्धः सपत्नीकेन वरेण च पादयोरन्वारब्धः स्रुवे फलादिकं निधाय अविच्छिन्नया घृतधारया- 'ॐ मूर्धानमित्यस्य भरद्वाजऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता चतुर्थीकर्मणि पूर्णाहुतिहोमे विनियोगः ।' 'ॐ मूर्धानन्दिवोऽअरतिं पृथिव्या वैश्वानरमृतऽआजातमग्निम् । कविꣳ सम्राजमतिथिं जनानामासन्नापात्रं जनयन्त देवाः स्वाहा' ।। इति जुहुयात् ।।

ततः स्रुवेण दग्धं चरुमानीय दक्षकराऽनामिकया वधूवरयोस्तिलकं

कुर्यात् । 'ॐ त्र्यायुषमिति नारायण ऋषिरुष्णिक्छन्द आयुर्देवता भस्मना तिलककरणे विनियोगः ।' 'ॐ त्र्यायुषं जगदग्नेः' इति ललाटे । 'ॐ कश्यपस्य त्र्यायुषम्' इति ग्रीवायाम् । 'ॐ यद्देवेषु त्र्यायुषम्' इति दक्षिणबाहुमूले । 'ॐ तन्नोऽअस्तु त्र्यायुषम्' इति हृदि ।।

ततो वरः कृतस्य होमकर्मणः साङ्गतायै पूर्वोक्तरीत्या गां , भूयसीं दक्षिणां च संकल्प्य दद्यात् ।। ब्राह्मणाश्च पूजितान् देवान् 'यान्तु देवगणा०' इत्यादिना, वह्निं च – 'ॐ यज्ञयज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहा । एष ते यज्ञो यज्ञपते सहसूक्तवाकः सर्वं वीरस्तं जुषस्व स्वाहा' ।। इत्यनेन विसृज्य, कलशजलेन वधूवरावभिषिच्य, गन्धपुष्पादिभिराशीर्वादं समन्त्रपाठं दद्युः ।। वरश्च सपत्नीकः साञ्जलिबद्धः- 'ॐ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम् ।। 'ॐ अच्युताय नमः ३।। ॐ चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।

हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ।। इतीश्वरं प्रार्थयेत् ।।

अथाऽऽचाराद्वधूः पत्युः पादौ प्रक्षाल्य तदुदकं पिबेत् ।। ततश्च यथाकुलाचारं कुर्वाणौ वधूवरौ यथासुखं तिष्ठेताम् ।।

*।। इति चतुर्थीकर्म समाप्तं शुभम् ।।*

## अथ अर्कविवाहविधिः

अथ तृतीये विवाहे करिष्यमाणेऽवश्यकरणीयोऽर्कविवाहविधिः ।। तृतीयां यदि चोद्वाहेत् तर्हि सा विधवा भवेत् । चतुर्थादिविवाहार्थं तृतीयेऽर्कं समुद्वहेत् ।। इत्यादि संग्रहादिवचनेभ्यो दोषश्रवणात् तृतीये विवाहे कर्तव्ये अर्कविवाहः प्राक्करणीय एव श्रेयोऽभिलाषिणा ।। विवाहदिनात् प्राक्तने पञ्चमादौ रविवासराऽन्विते शनिवासराऽन्विते वा शुभनक्षत्रयुक्ते ग्रहानुकूल्यवति ज्योतिर्विदादिष्टे शुभदिने ग्रामात् प्राच्यामुदीच्यां वा दिशि

सफलं सपुष्पं सम (समीप) देशवर्तिनमर्कवृक्षं प्राप्य तदधस्तात् होमवेदीं निर्माय, अर्कवृक्षं मध्ये कृत्वा तण्डुलपिष्टेन अष्टदलानि विधाय, अर्कविवाहसामग्रीं संपाद्य, विवाहकर्ता शुद्धे आसने उपविश्य दीपं प्रज्वाल्य, आचम्य, प्राणानायम्य, कुशादीन्यादाय, पूर्वसंकल्पमुच्चार्य, 'अमुक गोत्रः अमुक शर्माऽहं तृतीयमानुषीपरिणयजन्यदोषपरिहाराय अर्कविवाहं, तदङ्गत्वेन दीपकलशगणेशपूजनपूर्वकं मातृकापूजनं नान्दीश्राद्धप्रत्याम्नायीभूतं सुवर्णदानं केचन शिष्टाः कुर्वन्ति । नान्दीश्राद्धं पुण्याहवाचनम् अचार्यादिवरणं च करिष्ये' इति संकल्प्य, संकल्पोल्लिखितानि अङ्ग-कर्माणि यथाक्रमं सविधि कृत्वा, अर्ककन्यादातारं कंचन इतरं भिन्नगोत्रं ब्राह्मणम् वृणुयात्, वरणसामग्रीं गन्धाक्षतफलपुष्पाणि सकुशोदकां गृहीत्वा 'ॐ अद्य अमुक गोत्रः अमुक शर्माऽहं करिष्यमाणार्कविवाहकर्मणि अर्ककन्यादान-

करणार्थमेभिर्गन्धाक्षतपुष्पैर्दातृत्वेन अमुक गोत्रं अमुक शर्माणं त्वामहं वृणे' इति ।। ब्राह्मणश्च 'वृतोऽस्मि इति प्रतिब्रूयात् ।। ततः कर्ता बद्धाञ्जलिः- 'कन्यापिता यथा सूर्यो देवानां च प्रजापतिः। तथा त्वामर्कदानार्थमाचार्यत्वं कुरु द्विज' इति प्रार्थयेत् ।। ततो दाता - 'ॐ आचार्यत्वं करवाणि' इत्युक्त्वा वरं मधुपर्कविधिना अभ्यर्च्य, वरणसामग्रीं (गन्धाक्षतपुष्पफलानि) सकुशोदकां गृहीत्वा – 'ॐ अद्य अमुक गोत्रः अमुक शर्माऽहम् अर्ककन्याप्रतिग्रहार्थमेभिर्गन्धाक्षतपुष्पफलैस्त्वां वृणे' इति वृणुयात् ।। ततो वरः साञ्जलिः- ''त्रिलोकसाक्षिन् सप्ताश्व छायया सहितो रवे । तृतीयोद्वाहजं दोषं निवारय सुखं कुरु'' इति प्रार्थ्य- अर्कवृक्षे एव वा विधिना स्थापिते कलशे, तन्मुखस्थापितायां स्थाल्यां निहितायाम् अग्न्युत्तारण-पञ्चगव्यप्लावनसंस्कृतायां सुवर्णप्रतिमायां वा

- 'ॐ आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यञ्च । हिरण्ययेन सविता रथेनादेवो याति भुवनानि पश्यन्।।' इति मन्त्रेण सूर्यमावाह्य, रक्तेन वस्त्रेण वा अर्कवृक्षमावेष्ट्य, नाममन्त्रेण आसनम्, पाद्यम्, अर्घ्यम्, आचमनीयम्, स्नानीयं, पुनराचमनीयं, रक्तवस्त्रं, यज्ञोपवीतं, गन्धम्, अक्षतान्, रक्तपुष्पाणि, धूपं, दीपं, गुडौदननैवेद्यम्, ताम्बूलं, दक्षिणां च समर्प्य, आपोहिष्ठेत्यादिभिस्त्रि-भिर्मन्त्रैर्जलेनाऽभिषिच्य उत्थाय- 'मम प्रीतिकरा या वै त्वया सृष्टा पुरातनी। अर्कजा ब्रह्मणा सृष्टा अस्माकं परिरक्षतु' इत्येकवारं परिक्रम्य, पुनः साञ्जलिः- 'ॐ नमस्ते मङ्गले देवि नमः सवितुरात्मजे । रक्ष मां कृपया शश्वत् पत्नीत्वं म इहाऽऽगता' इति परिक्रम्य प्रार्थयेत् – 'ॐ अर्क त्वं ब्रह्मणा सृष्टः सर्वप्राणिहिताय च । वृक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्धनः।। सर्वारिष्टहरो नित्यं

सर्वमङ्गलदायकः । तृतीयोद्वाहजं पापं मृत्युं चाशु विनाशय'।। इति।।

ततः पञ्चभूसंस्कारपूर्वकमग्निं प्रतिष्ठाप्य वरः कर्मसमीपे प्राङ्मुख उपविशेत् ।। वरस्य अर्कस्य च मध्ये पटं प्रसार्य पटेन वरं व्यवधाय आचार्यादयो ब्राह्मणाः "मङ्गलं भगवान् विष्णुः०" इत्यादिकान्, "स्वस्तिनऽ इन्द्रो वृद्धश्रवाः०, भद्रं कर्णेभिः०, आ नो भद्रा०, इत्यादिकान्, वैदिकाँश्च मन्त्रान् पठेयुः ।। ततोऽन्तःपटमपसार्य, दानाचार्यः- 'ॐ समञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ सम्मातरिश्वा सन्धाता समुदेष्ट्री दधातु नौ ।।' इति मन्त्रेण समञ्जनं (अर्कवृक्षकर्मकं वरकर्तृकं निरीक्षणं) कारयेत् ।। पुनः आचार्यादयः स्वस्तिनऽ इन्द्रो० इत्यादिकान् पूर्वोक्तान् मन्त्रान् पठेयुः ।। ततो दानाचार्यः- सकुशोदकम् अर्कशाखाग्रं गृहीत्वा पूर्वसंकल्पमुच्चार्य – 'अमुक गोत्र अमुक शर्माऽहं काश्यप -

गोत्राम्, काश्यपावत्सारनैध्रुवेति त्रिप्रवराम् , आदित्यस्य प्रपौत्रीम्, सवितुः पौत्रीम्, अर्कस्य पुत्रीम् ......।।

काश्यपगोत्रस्यैव वरस्य विवाहे तु कन्याप्रद आचार्यः अर्ककन्याम् सूर्येण आत्मने प्रसादीकृतां मन्यमानः आत्मन एव प्रपितामहं पितामहं पितरं चोल्लिख्य तत्प्रपौत्रीपौत्रीपुत्रीत्वेन अर्ककन्यामुल्लिख्य स्वभगिनीबुद्ध्या दद्यादिति ऋषिभट्टप्रभृतयः संस्कारभास्करादिषु भाषन्ते ।। 'अमुक गोत्रस्य अमुक प्रवरस्य अमुक शर्म्मणः प्रपौत्राय अमुक शर्मणः पौत्राय, अमुक शर्मणः पुत्राय (इति त्रिवारमुच्चार्य) अमुक गोत्राय प्रवराय अमुक शर्मणे वराय तुभ्यं संप्रददे, इति वरहस्ते दद्यात् ।। कृताञ्जलिः – 'अर्ककन्यामिमां विप्र यथाशक्तिविभूषिताम्। गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय' इति पठेत् । दानप्रतिष्ठासिद्ध्यर्थं संकल्प्य सुवर्णं च

सर्वमङ्गलदायकः । तृतीयोद्वाहजं पापं मृत्युं चाशु विनाशय'।। इति।।

ततः पञ्चभूसंस्कारपूर्वकमग्निं प्रतिष्ठाप्य वरः कर्मसमीपे प्राङ्मुख उपविशेत् ।। वरस्य अर्कस्य च मध्ये पटं प्रसार्य पटेन वरं व्यवधाय आचार्यादयो ब्राह्मणाः ''मङ्गलं भगवान् विष्णुः०'' इत्यादिकान्, ''स्वस्तिनऽ इन्द्रो वृद्धश्रवाः०, भद्रं कर्णेभिः०, आ नो भद्रा०, इत्यादिकान्, वैदिकाँश्च मन्त्रान् पठेयुः ।। ततोऽन्तःपटमपसार्य, दानाचार्यः - 'ॐ समञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ सम्मातरिश्वा सन्धाता समुदेष्ट्री दधातु नौ ।।' इति मन्त्रेण समञ्जनं (अर्कवृक्षकर्मकं वरकर्तृकं निरीक्षणं) कारयेत् ।। पुनः आचार्यादयः स्वस्तिनऽ इन्द्रो० इत्यादिकान् पूर्वोक्तान् मन्त्रान् पठेयुः ।। ततो दानाचार्यः - सकुशोदकम् अर्कशाखाग्रं गृहीत्वा पूर्वसंकल्पमुच्चार्य – 'अमुक गोत्र अमुक शर्माऽहं काश्यप -

गोत्राम्, काश्यपावत्सारनैध्रुवेति त्रिप्रवराम् , आदित्यस्य प्रपौत्रीम्, सवितुः पौत्रीम्, अर्कस्य पुत्रीम् ......।।

काश्यपगोत्रस्यैव वरस्य विवाहे तु कन्याप्रद आचार्यः अर्ककन्याम् सूर्येण आत्मने प्रसादीकृतां मन्यमानः आत्मन एव प्रपितामहं पितामहं पितरं चोल्लिख्य तत्प्रपौत्रीपौत्रीपुत्रीत्वेन अर्ककन्यामुल्लिख्य स्वभगिनीबुद्ध्या दद्यादिति ऋषिभट्टप्रभृतयः संस्कारभास्करादिषु भाषन्ते ।। 'अमुक गोत्रस्य अमुक प्रवरस्य अमुक शर्म्मणः प्रपौत्राय अमुक शर्मणः पौत्राय, अमुक शर्मणः पुत्राय (इति त्रिवारमुच्चार्य) अमुक गोत्राय प्रवराय अमुक शर्मणे वराय तुभ्यं संप्रददे, इति वरहस्ते दद्यात् ।। कृताञ्जलिः – 'अर्ककन्यामिमां विप्र यथाशक्तिविभूषिताम्। गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय' इति पठेत् । दानप्रतिष्ठासिद्ध्यर्थं संकल्प्य सुवर्णं च

दद्यात् ।। वरः- अञ्जलौ जलगन्धाक्षतपुष्पाण्यादाय, –'ॐ यशो मे कामः समृध्यताम्' इति तत्रैव क्षिपेत् ।। पुनस्तान्यादाय –'ॐ यशो मे कामः समृध्यताम्' इति तत्रैव क्षिपेत् ।। ततो गायत्रीमन्त्रं जपन् सूत्रेण पञ्चवारमर्कवृक्षं वेष्टयित्वा तत्सूत्रं निष्कास्य पञ्चगुणं कृत्वा -'ॐ बृहत्साम क्षत्रभृद्बृद्धबृष्णियं त्रिष्टुभौजः शुभितमुग्रवीरम् । इन्द्रस्तोमेन पञ्चदशेन मध्यमिदं वातेन सगरेण रक्ष ।।' इति मन्त्रेण अर्कस्कन्धे बध्नीयात् ।।

ततः पूर्वनिर्मितेषु अष्टसु दलेषु अलंकृतान् ताम्रमयान् मृण्मयान् वाऽष्टकलशान् निधाय तान् वस्त्रेणाऽऽवेष्ट्य तेषु हरिद्राम् अष्टौ गन्धाँश्च प्रक्षिप्य – ''श्रीखण्डाऽगरुकर्पूराः सगोरोचनकुङ्कुमाः । लाक्षामृगद्वीपिमदौ गन्धा अष्टौ प्रकीर्तिताः।।'' तन्मुखेषु स्थालीं तस्यां च सौवर्णी-मग्न्युत्तारणपञ्चगव्य-प्लावनशोधितां विष्णुप्रतिमां निधाय, पूर्वादिक्रमेण

सर्वासु प्रतिमासु –'ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपाᳬं सुरे०' इति मन्त्रेण विष्णुमावाह्य पाद्यादिभिर्नैवेद्य-नीराजनान्तैरुपचारैः संपूजयेत् ।। ततोऽग्निमानीय –'ॐ एतन्ते देव सवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे, तेन यज्ञमव तेन यज्ञपतिं तेन मामव ।।' इति मन्त्रेण, 'ॐ वरदनामन् ! अग्ने इहाऽऽगच्छ इह तिष्ठ' इति प्रतिष्ठाप्य नाममन्त्रेण संपूजयेत् ।। आचार्यः कुशकण्डिकां होमसंकल्पान्तामग्नि-स्थापनोक्तां समापयेत् ।। ततो वरः कुशादीन्यादाय देशकालौ, स्वकीये गोत्रनामनी च संकीर्त्य, 'अस्मिन्नार्कविवाहकर्मणि प्रजापतिम्, इन्द्रम्, अग्निम्, सोमम्, बृहस्पतिम्, अग्निम्, वायुम्, सूर्यम्, प्रजापतिम्, अग्निम्, वायुम्, सूर्यम्, अग्नीवरुणौ, अग्नीवरुणौ, अग्निम्, वरुणम्, सवितारम्, विष्णुम्, विश्वान् देवान्, मरुतः, स्वर्कान्, वरुणं,

प्रजापतिं, तथैतत्कर्मप्रधानभूतं बृहस्पतिम्, अग्निम्, अग्निवायुसूर्यान्, प्रजापतिम्, अग्निं, स्विष्टकृतं चाऽऽज्येनाऽहं यक्ष्ये' इति संकल्पयेत् ।।

ततः स्वयमाचार्यो वा दक्षिणं जानु निपात्य मनसा प्रजापतिं ध्यायन् –'ॐ प्रजापतये स्वाहा, इदं प्रजापतये न मम' इत्यादिरीत्या संकल्पोल्लिखिताभ्यः प्रजापत्यन्ताभ्यो देवताभ्य आज्याहुतीर्दत्त्वा –'ॐ सङ्गीभिरित्यस्य अङ्गिरसऋषिस्त्रिष्टुप्छन्दो बृहस्पतिर्देवताऽऽज्यहोमे विनियोगः ।। ॐ सङ्गीभिरङ्गिरसो नक्षमाणो भग इवेदर्यमणन्निनाय । जने मित्रो न दम्पती अनक्ति बृहस्पतये वाजयाऽऽशूँरिवाजो स्वाहा ।। इदं बृहस्पतये न मम' ।।१।। 'ॐ यस्मैत्वेति वामदेवऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवताऽऽज्यहोमे विनियोगः ।। ॐ यस्मै त्वा कामकामाय व्वायं सम्राड्यजामहे । तमस्मभ्यं कामं दत्त्वाऽथेदं त्वं घृतं पिब स्वाहा ।।

इदमग्नये न मम' ।।२।। 'ॐ यस्त्वसमस्तव्याहृतीनां प्रजापति-ऋर्षिर्गायत्र्युष्णिगनुष्टुब्बृहत्यश्छन्दांसि अग्निवायुसूर्यप्रजापतयो देवता आज्यहोमे विनियोगः ।। ॐ भूः स्वाहा इदमग्नये न मम' ।।३।। 'ॐ भुवः स्वाहा इदं वायवे न मम' ।।४।। 'ॐ स्वः स्वाहा इदं सूर्याय न मम' ।।५।। 'ॐ भूर्भुवः स्वाहा इदं प्रजापतये न मम' ।।६।। इति षट् प्रधानाहुतिर्जुहुयात् ।। ततः भूराद्याः नवाहुतीः (अग्निस्थापनोक्ताः प्रायःश्चित्तसंज्ञकाः) हुत्वा – 'ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते न मम' । इति जुहुयात् ।। ततः संस्रवप्राश-नम् ।। ततः प्रणीताविमोकं, बर्हिर्होम, पूर्णपात्रदानं च कृत्वा । वरः पुनरर्कवृक्षं